(अथानवरतवाजिवदनाराधनलब्धविद्यातिशयः कविकुलाग्रणीर्वादिराजमुनिः स्वजन्ममहीमारभ्य स्वसञ्चरितसकलतीर्थक्षेत्रमहिमावलोकनेन समुल्लसितमनःप्रसादः तन्महिमानुवर्णनलोलुपतया तीर्थक्षेत्रदेवस्तुत्यादिरूपप्रबन्धं चिकीर्षुः प्ररिप्सिताखिल-शुभकार्येषु श्रीमन्नारायणगुणानुस्मरणरूपमङ्गलं कर्तव्यमिति स्वान्तोपलक्षितसज्जनान् प्रत्युपदिशति -) **हरीति** । हे **मनः** त्वम् । स्वस्य विष्णुभक्ततया स्वमनस्सदृशसकल-विष्णुभक्तमनसां विहारयोग्यत्वस्यापि लाभेन [1]साधिकारिकत्वसूचनाय चेयं सम्बुद्धिः । **भवघर्मरिपोः** भवः संसारः स एव घर्मस्तस्य रिपोः । क्षीराम्बुधिरपि घर्मपरिहारी । अय-मपि भवघर्मपरिहारी । अतस्तयोः साम्यमुचितमिति सूचनायास्य विष्णुकथारूपप्रबन्धस्य मोक्षफलसूचनाय चेदं विशेषणम् । **हरिक्षीराम्बुधेः** हरिरेव क्षीराम्बुधिः । गाम्भीर्यादि-गुणयोगात् तस्य । हरतीति व्युत्पत्त्या भवघर्महारित्वमस्यैव युक्तमिति सूचनाय हरिपदम् । **चित्रचारित्रचतुरोर्मिषु** चित्राणि अघटितघटकशक्तियुक्तत्वेनाश्चर्यतमानि । चरित्राण्येव चारित्राणि । [2]प्रज्ञादिभ्यश्चेति स्वार्थेऽण्प्रत्ययः । जगत्सर्जनादिकर्मण्येव चतुराः । तापोपशमादौ प्रौढाः । ऊर्मयस्तराङ्गास्तेषु । 'भङ्गस्तरङ्ग ऊर्मिः' इत्यमरः । इतरतरङ्गाणां बहुनिमज्जने गदतोऽपकारित्वमप्यस्ति । हरिकथारूपतरङ्गाणां तु अहरहर्विहरणेऽपि तन्नास्तीति सूचनाय चतुरपदम् । हरिचरित्राणामनन्तत्वद्योतनाय शक्तिव्यक्त्यात्मना कदाचिद्दर्शनं कदाचिदन्तर्धानं चेति सूचनाय ऊर्मीणां समुद्रेणेव चारित्राणां हरिणाऽ-भेदसूचनाय चोर्मित्वोक्तिः । तर्हि कथं भेदसापेक्षसम्बन्धार्थकषष्ठीति शङ्कापरिहाराय भेदहीनेऽपि भेदकार्यनिर्वाहकशक्तिविशेषस्य[3] विशेषेणाश्चर्यतमत्वादिति सूचनाय चित्रपदम् । 'विस्मयोऽद्भुतमाश्चर्यं चित्र'मित्यमरः । **अहरहः** प्रतिदिनम् । कालाध्वनो-

---

[1] अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत् ।
स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलम् ।।
– भागवततात्पर्यनिर्णयोदाहृत(१/१/२)वामनपुराणवचनम्

[2] पा.सू. (५/४/३८)

[3] सर्वेषां ब्रह्मधर्माणां ब्रह्मणा सविशेषोऽत्यन्ताभेदः । क्रियादीनां नित्यता शक्तिव्यक्तिरूपा व्यक्ति-रूपस्यापि नित्यता शक्तिरूपस्याप्यभिन्नता सविशेषता विशेषस्याभेदः स्वनिर्वाहकता चेति । न ह्येतेष्व-न्यतमस्याप्यकल्पनायामुदाहृतोभयव्यपदेशविरोधशान्तिर्भवतीति । – न्यायसुधायाम् (३/२/१५)

रत्यन्तसंयोग [1] इति द्वितीया । 'स्मर्तव्यः सततं [2] विष्णुः' इति स्मृतेः । **स्वैरं** यथेष्टम् । **विहर** [3] रमस्व । संसारदुःखपरिहाराय हरेर्जगत्सर्जनादिदिव्यकर्माणि निरन्तरं स्मरेत्यर्थः । 'हृञ् हरण' इति धातोर्विपूर्विकाल्लोट् । उपसर्गवशादेव विहरणार्थकत्वं च । सकलसज्जनमनोरञ्जकविचित्रहरिचारित्रनिरूपकतयाऽस्य ग्रन्थस्य सविषयकत्वं सूचितम् । लोडादेशस्य सेर्ह्यादेशे *अतोहेरिति हि लोपः । स्मरणजन्यसुखानुभवो न करणमात्रस्यान्तःकरणस्य । किन्तु [4] स्मरणकर्तृजीवस्येति द्योतनाय विहरेति परस्मैपदप्रयोगः । स्मरणे स्वतन्त्रसाधनत्वान्मनसः कर्तृत्वोपचारः । अभिवर्ण्यमानतीर्थानां समुद्रस्याधिपतित्वेन हरेः सकलतीर्थस्वामित्वद्योतनाय समुद्रत्वोक्तिः । तथा तत्र तीर्थानां पवित्रीकरणशक्तिरपि [5] हरिसन्निधानादेवेति द्योत्यते । अथवा काव्यस्थितसकलपद्यानां तीर्थवर्णनरूपत्वादाद्यपद्येऽपि तदावश्यकमिति मन्वानो ग्रन्थकारः हरिमपि तीर्थराजक्षीरसमुद्रत्वेन वर्णितवान् । अत्र परममङ्गलरूपदेवतावाचकहरिशब्दप्रयोगादेव सर्वसामञ्जस्येऽपि वर्णगुणशुद्धिरधिका । **रूपकमलङ्कारः** । 'एकत्वरूपणं यत्स्यादुपमानोपमेययोः । रूपकं नाम' इत्युक्तेः । वृत्तं तु **पथ्यावक्त्रम्** 'युजोर्जेनसरिद्भर्तुः पथ्यावक्त्रं प्रचक्षते' इत्युक्तत्वात् ॥ १ ॥

### श्रीहयग्रीवप्रार्थना

**हयग्रीवदयासिन्धुरन्धूकृतभवाम्बुधिः ।**
**प्रबन्धमप्रतिद्वन्द्वं करोत्वेनमनेनसम् ॥ २ ॥**

---

१ पा.सू. (२/३/५); * पा.सू. 'अतो हेः' (६/४/१०५)

२ **स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।**
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥
– महाभारततात्पर्यनिर्णयोदाहृतमहाभारतवचनम् (२/७२) । पाद्मे च ।

३ हे जिह्वे मम निःस्नेहे हरिं किं नु न भाषसे ।
हरिं वदस्व कल्याणि संसारोदधिनौर्हरिः ॥ – कृष्णामृतमहार्णवः (७०)

४ स्वातन्त्र्येण स्मरणसाधनं मनः । – प्रमाणपद्धतिः

५ पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः । – श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्

अधुना हयग्रीवदयासिन्धोरसदृशत्वमुपपाद्य तत एव स्वग्रन्थस्याप्यसदृशत्वं प्रार्थयते – **हयग्रीवेति**। **अन्धूकृतभवाम्बुधिः** अनन्धुरन्धुः सम्पद्यमानः कृतः अन्धूकृतः। कूपीकृत इत्यर्थः । 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमरः । भवाम्बुधिः भक्तजनसंसारो येन स तथोक्तः । अपारमपि संसारसमुद्रं कूपमिव लीलयोत्तारयतीति भावः । 'सन्तारकः [१]सकलसंसृतिदुस्तरार्णात्' इति वचनात् । **हयग्रीवदयासिन्धुः** हयग्रीवदयैव सिन्धुः । दयाया अपरिमितत्वेन सिन्धुत्वोक्तिः । **अनेनसं** न विद्यते एनःशब्दार्थनिष्टो दोषो यस्य स तथा तम् । एनं प्रारिप्सिततया बुद्धिस्थम् । 'द्वितीयाटौस्वन' इति [२]एनादेशः । **प्रबन्धम्** । **अप्रतिद्वन्द्वं** प्रतिद्वन्द्वरहितमसदृशमित्यर्थः । **करोतु** कुर्यात् 'डुकृञ् करणे' इति धातोः प्रार्थनायां लोट् । यथा हयग्रीवदयासिन्धुः स्वप्रत्यर्थीभूतभवसमुद्रमल्पीकृत्य स्वयमसदृशतया वर्तते । तथा स एव इतरप्रबन्धानल्पीकृत्यास्मत्प्रबन्धमसदृशं करोत्विति भावः । सकलदोषाकरभवसिन्धोरधःकरणेन हयग्रीवदयासिन्धोरप्यर्थतोऽनेनस्त्वलाभात्, अस्मत्प्रबन्धस्याप्यनेनस्त्वकरणे शक्तिरस्तीत्यपि द्रष्टव्यम् । हेतुगर्भविशेषणदानाद्धेतुगर्भोऽलङ्कारः ।। २ ।।

### श्रीमदानन्दतीर्थप्रार्थना

**आजन्मभूमेरटतोऽखिलेषु तीर्थेषु तद्वर्णनभारमूढ्वा ।**
**आयासमस्मन्मृदुमानसस्य वायुर्मुहुः कृन्ततु मध्वरूपी[३] ।। ३ ।।**

---

१ स प्रीयतां परतमः परमादनन्तः **सन्तारकः सकलसंसृतिदुस्तरार्णात्** ।
यत्पादपद्ममकरन्दजुषो हि पार्थाः स्वाराज्यमापुरुभयत्र सदा विनोदात् ।।
– म.भा.ता.नि. (२/१८८)

सक्रोधदीप्तनयनान्तहतः परस्य शोषं क्षणादुपगतो दनुजादिसत्त्वैः ।।
– म.भा.ता.नि. (८/१०)

२ पा.सू. (२/१/१३)

३ अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ।। – न्यायामृतम्

इदानीमादिगुरुं [१] श्रीमध्वाचार्यं प्रार्थयते – **आजन्मेति**। **आजन्मभूमेः** जन्मभूमिमारभ्य। 'आङ्मर्यादाभिविध्योः'रित्यत्र विभाषानुवृत्तेर्न समासः। **अखिलेषु तीर्थेषु**। **तद्वर्णनभारं** तेषां तीर्थानां स्तुतिस्तत्र यो भारः आग्रहस्तम्। अतिबहुलप्रमेयवर्णने। आग्रहस्याबोधादिना मध्ये मध्ये आयासहेतुत्वाद्भार इत्युक्तम्। **ऊढ्वा** धृत्वा। **अटतः** सञ्चरतः [२]। क्रमेण तानि सर्वाणि तीर्थान्यनुचिन्तयत इत्यर्थः। **अस्मन्मृदुमानसस्य** आत्मकोमलचित्तस्य। भारासहिष्णुत्वादिद्योतनाय मृद्विति विशेषणम्। स्तोतुमसमर्थमनस इत्यर्थः। **आयासं** कथं स्तोतुं मम शक्तिर्भविष्यतीति चिन्तालक्षणं खेदम्। **मध्वरूपी** मध्वाचार्यात्मकः [३] वायुः। **मुहुः** पदे पदे। **कृन्ततु** भिन्द्यात्। भारतीपतित्वाज्ज्ञानबलपूर्णत्वाच्च स्तोतुं शक्तिं दत्वा चिन्तां परिहरत्वित्यर्थः। कृती छेदन इति धातोः प्रार्थनायां लोट्। यथा शिरो निहितभारस्याध्वनि सञ्चरतः पुरुषस्य खेदं वायुः परिहरति, तथा पदे पदे अबोधादिजनितमनस्तापं प्रबुद्धशिरोमणिः मध्वरूपी वायुः परिहरेदिति भावः। **उपमालङ्कारः**। **इन्द्रवज्रावृत्तम्**। 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति ॥ ३ ॥

### वागीशतीर्थप्रार्थना

**वागीशतीर्थमुनिवर्य भवद्दयाम्बुयोगेन पावय मनोगृहमन्वहं मे।**
**नागेन्द्रतल्पमधिरोपय तत्पदाब्जरागेण रञ्जय कलिं जय तद्विविक्षुम्॥४॥**

स्वगुरुं प्रति मनोनैर्मल्यादिकं प्रार्थयते – **वागीशेति**। हे वागीशतीर्थमुनिवर्य वागीशतीर्थाख्यमुनिश्रेष्ठ। **भवद्दयाम्बुयोगेन** भवतः कृपाजलसम्बन्धेन। **मे मनोगृहं** हृदयगृहं। **अन्वहं** प्रतिदिनम्। **पावय** निर्मलं कुरु। यथा जलसेकेन गृहं निर्मलं कुर्वन्ति

---

[१] स्मृत्वा गुरुं पूर्वगुरुमादिमूलगुरूंस्तथा।
देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक्॥ – इति तन्त्रसारसङ्ग्रहे (४/१०९)

[२] बुद्धिशुद्धिकरगोनिकराढ्यं तीर्थजातमुभयं च धरण्याम्।
आत्ममज्जनत एव निकामं पर्यशोधयदमन्दमनर्घः॥ – सुमध्वविजये (६/३५)

[३] निस्सीमपौरुषबलस्य कुतः श्रमोऽस्य। – म.भा.ता.नि. (७/६)

तद्वदिति भावः । 'पूञ् पावन' इति धातोर्णिजन्ताल्लोट् । **नागेन्द्रतल्पं** शेषपर्यङ्कं श्रीनारायणम् । **अधिरोपय** प्रापय। 'रुह बीजजन्मनि प्रादुर्भावे च' इत्यस्माद्धातोर्णिजान्ताल्लोट् । **तत्पदाब्जरागेण**[1] तस्य मनोगृहं प्रविष्टस्य श्रीनारायणस्य **पदाब्जं** पदारविन्दम् । तस्य रागेणानुरागेण रक्तिम्ना । मन्मनो रञ्जय अलंकुरु । यथा गैरिकादिरागेण गृहमण्डनं कुर्वन्ति तद्वदिति भावः । 'रञ्ज राग' इत्यस्माद्धातोर्णिजन्ताल्लोट् । **तद्विविक्षुं** तत् मनोगृहं विविक्षुं प्रवेष्टुमिच्छुम् । **कलिं** मनोदोषहेतुं कल्याख्यासुरश्रेष्ठम् । **जय** अपाकुरु । 'जि जय' इति धातोर्लोट् । [2]गुरुकृपा हि सकलपुरुषार्थकरीति भावः । रूपकानुप्रासयोः **संसृष्टिः**। **वसन्ततिलकावृत्तम्**। 'उक्ता वसन्ततिलका तभजाः जगौ गः' इत्युक्तत्वात् ।। ४ ।।

### विषयनिर्देशः

**तीर्थक्षेत्रतदीशानां माहात्म्यानि यथामति ।**
**वादिराजो यतिः स्तौति पद्यैः कतिपयैः कविः ।। ५ ।।**

**कविः वादिराजः यतिः** प्रबन्धरूपेण प्रयत्नवान् वादिराजाख्ययतिरिति यावत् । **तीर्थक्षेत्रतदीशानां**[3] तीर्थानि गङ्गादीनि । क्षेत्राणि श्रीरङ्गादीनि । तदीशास्तत्स्वामिनो देवास्तेषाम् । **माहात्म्यानि** पवित्रीकरणज्ञानभक्त्यादिपुरुषार्थप्रदत्वादिरूपसामर्थ्यानि । **कतिपयैः** परिमितैः[4] । **पद्यैः** छन्दोबद्धवाक्यैः। **यथामति** मतिमनतिक्रम्य । बुद्ध्यनुसारेणेत्यर्थः । **स्तौति** स्तुतिं करोति । 'ष्टुञ् स्तुता'विति धातोर्लोट् । गर्वपरिहाराय प्रथमपुरुषप्रयोगः ।। ५ ।।

---

१ तरुणादित्यसवर्णकचरणाब्जामलकीर्ते । – द्वादशस्तोत्रम्

२ गुरुप्रसादो बलवान् न तस्माद्बलवत्तरः । – ब्रह्मसूत्रभाष्ये (३/३/४५)

श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं प्रपन्ना
मान्याः स्मः किमपि च वदन्तोऽपि महताम् ।। – न्यायसुधा

३ पुष्कराद्यानि क्षेत्राणि गङ्गाद्याः सरितस्तथा । – (स्मृतिः)

४ 'सुवर्णां को नु वर्णयेत्' (१/४६) इतिवत् ।

## जन्मभूमिः (परशुरामक्षेत्रम्)

**कर्णे पदन्यस्तरुची रिरंसुर्वाराशिवस्त्रं जघनाद्धि यस्याः ।**
**अमूमुचद्बाणकरेण भूमेः श्रीभार्गवः सा जयति क्षितिर्नः ॥ ६ ॥**

आजन्मभूमेरित्युक्तिमनुसृत्येदानीं स्वजन्मभूमिं स्तौति । **कर्ण** इति । **भूमेः कर्णे** गोकर्णे[१] । **पदन्यस्तरुचिः** पदेन पादेन न्यस्ता रुचिः कान्तिर्येन सः तथोक्तः । स्वपाद-तलविन्यासेन समुत्पादितकान्तिरित्यर्थः । रहसि नायिकायाः कर्णे पदैः सुप्तिङन्त-रूपस्वचाटुवचनैः निवेदितस्वानुरागः कामुकोऽनेन ध्वन्यते । **श्रीभार्गवः** परशुरामः । **रिरंसुः** सन् रन्तुमिच्छुः सन् । **यस्याः** भूमेः । जघनात् समुद्रतीरे तथा जघनशब्दवाच्यात् सह्याचलप्रत्यन्तप्रदेशात् । चाटूक्त्याऽभिमुखीभूतायाः । नितम्बप्रदेशादिति ध्वनिः । **वाराशिवस्त्रं** समुद्रवसनम् । **बाणकरेण** शराख्यहस्तेन । **अमूमुचद्धि** मोचितवान् । 'मुच्लृ मोक्षण' इत्यस्माद्धातोर्णिजन्ताल्लुङ् । करेण नायिकायाः नीवीश्लथनरूपो नायक-व्यापारोऽनेन व्यज्यते । श्रीपरशुरामः समस्तां भूमिं ब्राह्मणेभ्यो दत्वा स्वनिवासार्थं गोकर्णे स्थित्वा बाणप्रयोगं कृत्वा स्वबाणो यावति प्रदेशे पतति तावत् पर्यन्तं सह्याद्रिप्रदेशात् समुद्रं निष्कासितवानिति पौराणिकीं प्रसिद्धिं हि शब्देनाह । **सा नः** अस्माकम्। **क्षितिः** अस्मज्जन्मभूमिः । **जयति** उत्कृष्टा वर्तते।[२] 'जि जय' इत्यस्माद्धातोर-कर्मकाल्लट् । अत्र रिरंसुरित्यादिविशेषणसाम्यादप्रस्तुतनायकव्यापारप्रतीत्या **समासोक्ति-रलङ्कारः** । तदुक्तम् – विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति ॥ ६ ॥

## रजतपीठपुरम् (उडुपि)

**काशीतले कृतपदाऽपि सरित् सुराणामायाति यद्गतपवित्रसरोऽधुनाऽपि।**
**रुद्रादिदेवगणसेवितसर्वभागं तद्रूप्यपीठपुरमप्रतिमं त्रिलोक्याम् ॥७॥**

---

१ गोकर्णक्षेत्रवर्णनम् (श्लो.८०-८२); सह्याद्रिवर्णनम् (श्लो.५८) ।

२ जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ।
उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयार्थे सकर्मकः ॥ – इति मायावादखण्डनटीकायाम् ।

रजतपीठपुरं स्तौति – **काशीतल** इति । **सुराणां सरित्** सुरसरित् गङ्गा । **काशीतले** काशीक्षेत्रे । **कृतपदाऽपि** कृतस्थानाऽपि । उत्तमस्थले स्थिता अपीत्यर्थः । **यद्गतपवित्रसरः** यद्गतं रजतपीठपुरगतम् । पवित्रं पावनम् । सरः मध्वसरोवरम् । **अधुनाऽपि** [1] इदानीमपि । **आयाति** श्रीमदाचार्यस्नानार्थं अनन्तेश्वराज्ञया आगच्छति । **रुद्रादिदेवगणसेवितसर्वभागम्** रुद्रादिदेवगणेन सेवितः आश्रितः सर्वभागः सर्वप्रदेशो यस्मिन् । **तद्रूप्यपीठपुरं** अपभ्रष्टभाषया [2] 'उडुपी' नाम्ना सर्वजनप्रसिद्धं क्षेत्रम् । **त्रिलोक्यां** त्रयाणां लोकानां समाहारः त्रिलोकी तस्याम् । **अप्रतिमं** असदृशम् । श्रीभागीरथी-सन्निधानयुक्तसरो[3]वरत्वाद्रुद्रादिदेवगणसेव्यत्वाच्च लोकत्रयेऽप्येतत्क्षेत्रसदृशं क्षेत्रं नास्तीत्यर्थः। **काव्यलिङ्गमलङ्कारः** ॥ ७ ॥

**यस्मिन् वाग्वज्रधारा दुरितकुलमहातूलदाहेऽतिशूरा**
**दण्डप्रोद्भासिहस्ताः स्फुरदसिसमसन्मार्गसक्ताः समस्ताः ।**
**श्रीकृष्णस्नेहपाशाः श्रमहरगतयः शान्तिभाजो विरक्ता**
**योगीन्द्राश्चित्रलोकाधिपनिभविभवा मध्वदासा जयन्ति ॥ ८ ॥**

तदेव वर्णयति – **यस्मिन्** रजतपीठपुरे । **मध्वदासाः** । **योगीन्द्राः** यतीन्द्राः । **समस्ताः** अष्टावपि प्रत्येकम् । **वाग्वज्रधाराः** 'विश्वं सत्यं हरिः कर्ता जीवोऽन्यः परमार्थतः । वेदः सत्यं पुराणं च' इत्यादिरूपवागेव वाक्यमेव वज्रधारा येषां ते । शास्त्राभ्यासपाटवेनातिनिशितवाक्यवज्रधारया विरुद्धराद्धान्तपर्वतपक्षविच्छेदनसमर्था इत्यर्थः। अनेन वज्रधरस्येन्द्रस्य विभवः सम्पादितः । **दुरितकुलमहातूलदाहे** दुरितानां कुलं

---

[1] तदाज्ञयोपागतजाह्नवीजले जनोऽत्र सस्नौ सह पूर्णबुद्धिना।
ततः परं द्वादशवत्सरान्तरे सदाऽऽव्रजेत् सा तदनुग्रहाङ्किनी। – इति सुमध्वविजये (४/४२)

[2] रजतपीठपुरस्य 'ओडिपु' इति अपभ्रष्टसञ्ज्ञा। - सुमध्वविजयभावप्रकाशिका (२/६)

[3] **मध्वसरोवरार्घ्यमन्त्रः –**
नागासनाज्ञया प्राप्तगङ्गाजलसमाश्रित।
श्रीमन्मध्वतटाकेदं गृहाणार्घ्यं नमोऽस्तु ते ॥

समूहस्तदेव महातूलं कार्पासराशिः तस्य दाहे भस्मीकरणे । **अतिशूराः** अत्यन्तं शौर्योपेताः । 'अग्निचित् कपिलस्सत्री राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः' । [1]'दर्शनादेव साधवः' इत्यादिवचनात् पापनिर्हरणे समर्था इत्यर्थः । अनेन दाहकस्याग्नेर्विभवः सम्पादितः । **दण्डप्रोद्भासिहस्ताः** दण्डेन प्रोद्भासिनः हस्ताः येषां ते । गोसर्पनिर्हरणार्थं करधृतवेणुदण्डा इत्यर्थः । अनेन दण्डधरस्य यमस्य विभवः सम्पादितः । **स्फुरदसिसन्मार्गसक्ताः** स्फुरदसेः निशित[2]खड्गस्य समः सन्मार्गोऽति-तीक्ष्णतपश्चरणादिरूपः तत्रासक्ताः । असिवदतितीक्ष्णानशनादिव्रतचर्यनिष्ठा इत्यर्थः । अनेन खड्गधारिणो निर्ऋतेर्विभवः सम्पादितः । **श्रीकृष्णस्नेहपाशाः** श्रीकृष्णस्नेहो भक्तिः स एव पाशो येषां ते । श्रीकृष्णभक्ता इत्यर्थः । अनेन पाशधारिणो वरुणस्य विभवः सम्पादितः । **श्रमहरगतयः** श्रमः संसारखेदः तं हरन्तीति श्रमहराः । गतयः सञ्चारा येषां ते । [3]परानुग्रहाय सञ्चारयुक्ता इत्यर्थः । अनेन श्रमहरस्य वायोर्विभवः सम्पादितः । **शान्तिभाजः** शान्तिं भजन्तीति शान्तिभाजः । अनेन शीतकरस्य चन्द्रस्य विभवः सम्पादितः । **विरक्ताः** वैराग्योपेताः । अनेन विरक्तशिरोमणेः शिवस्य विभवः सम्पादितः । **त्रिलोकाधिपतिनिभविभवाः** एकैकस्याष्टलोकपालविभवसम्पत्तेर्वर्णना-च्चित्रेत्युक्तम् । चित्राः वज्रधरत्वदाहकत्वादिनानाधर्मोपेताः लोकाधिपाः इन्द्राद्यष्टलोक-पालाः । तेषां निभः समानो विभवः सम्पत् येषां ते तथोक्ताः सन्तः । **जयन्ति** उत्कृष्टा वर्तन्ते । **अभूतोपमालङ्कारः** । उक्तविधया वज्रधरत्वाद्यष्टैश्वर्यसम्पन्नस्यैकैकलोकपालस्य प्रागभूतत्वात् तदुक्तम् । 'यस्य कस्यचिद्वस्तुनो यस्मात्कस्मादपूर्वाद्धर्मात् सादृश्यस्य गम्यत्वे अभूतोपमालङ्कारः' इति । **स्रग्धरावृत्तम्** । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तिता सा' इत्युक्तत्वात् ॥ ८ ॥

---

[1] न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ – भागवते (१०/८४/११)

[2] क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तद् कवयो वदन्ति । – इति कठोपनिषदि ।

[3] जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ।
अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य ॥ – भागवते (३/५/३)

**द्वारावतीं सकलभाग्यवतीमुपेक्ष्य गोपालबाललनाकरपूजनं च ।**
**वार्धिं वधूगृहमतीत्य स मध्वनाथो यत्रास्ति तद्रजतपीठपुरं गरीयः ॥९॥**

**द्वारावतीमिति** । **स** प्रसिद्धः । **मध्वनाथः** मध्वाचार्याणां स्वामी श्रीकृष्णः । **सकलभाग्यवतीं** समस्तैश्वर्योपेताम् । दुस्त्यजत्वद्योतनायेदं विशेषणम् । एवं विशेषणान्तरस्यापि प्रयोजनं द्रष्टव्यम् । **द्वारावतीं** द्वारावतीनामककृष्णनगरीम् । **उपेक्ष्य** त्यक्त्वा । **गोपालबाललनाकरपूजनं च** गोपालबाललनाः गोपकुमार्यस्तासां करपूजनं च उपेक्ष्य । **वधूगृहं** वध्वा लक्ष्म्याः गृहं जन्मगृहम् । **वार्धिं** समुद्रम् । **अतीत्य** अतिक्रम्य । **यत्र** यस्मिन् रजतपीठपुरे । **अस्ति** तिष्ठति[१] । अतः तद्रजतपीठपुरं **गरीयः** अतिशयेन गुरुः । सकलक्षेत्रोत्तममित्यर्थः । गरीयस्त्वे कृष्णनिवासस्य हेतुत्वप्रतीत्या **काव्यलिङ्गमलङ्कारः** ॥ ९ ॥

**रूप्यात्मकस्य भवतस्तुलनां न भेजुः क्षेत्राणि भारतमहीरचितान्यमूनि ।**
**ईशाचलं च जयसीश्वरमात्रवासं श्रीमध्वहस्तकमलार्चितकृष्णमूर्त्या ॥१०॥**

**रूप्यात्मकस्येति** । हे रूप्यपीठपुर । **भारतमहीरचितानि** भारतभूम्यां कृतानि **अमूनि क्षेत्राणि** । **रूप्यात्मकस्य** रजतरूपस्य । **भवतः** तव । **तुलनां** साम्यं । **न भेजुः** नापुः । 'भज सेवायाम्' इतिधातोर्लिट् । **ईश्वरमात्रवासं** केवलरुद्रनिवासं । **ईशाचलं च** कैलासपर्वतं च । **श्रीमध्वहस्तकमलार्चितकृष्णमूर्त्या** श्रीमध्वाचार्यकरकमलपूजितकृष्णमूर्त्या । **जयसि** विजयसे । सकलक्षेत्रासदृशत्वे रूप्यात्मकस्येति विशेषणस्य रजताचलादाधिक्ये मध्वहस्तकमलेतिविशेषणस्य च पृथगेव वाक्यमर्यादया हेतुप्रतिपादकत्वात् **काव्यलिङ्गमलङ्कारः** ॥ १० ॥

---

१ मरुद्रूपे गुरौ प्रेम्णा हरिर्द्वारावतीपुरात् ।
नावा सेवातुरं द्रष्टुकामो दामोदरः प्रभुः ॥
आयादायासहृत् स्वानामिति सर्वस्य सम्मतम् ॥ – सरसभारतीविलासः (७/१८-१९)

## (उडुपि)श्रीकृष्णवर्णनम्

**निर्मथ्योग्रभवार्णवे निजमनोभीष्टं दिशामीति यः**
**सम्यग् ज्ञापयितुं करेण विलसन्मंथानमन्येन च ।**
**रम्यं दाम दधन्महेशरजतग्रामश्रियोऽलङ्कृतिः**
**कर्मन्दीश्वरभक्तिबंधनवशः प्रीतोऽस्तु कृष्णः प्रभुः ॥ ११ ॥**

**निर्मथ्येति** । **उग्रभवार्णवे** क्रूरसंसारसमुद्रे । **निर्मथ्य** प्रतिबन्धकीभूत-दुरदृष्टादिकमालोड्य । **निजमनोभीष्टं** स्वभक्तमनोभीष्टं ज्ञानभक्तिसुखसम्पदादि । **दिशामि** ददामि । 'दिश अतिसर्जन' इति धातोर्लोट् । इति इममर्थम् । **सम्यग् ज्ञापयितुं** करपल्लवमुद्रया प्रत्यक्षतोऽपि दर्शयितुम्। **करेण** दक्षिणहस्तेन । **विलसन्मन्थानं** स्फुरन्मथनदण्डम् । **अन्येन** वामेन करेण । **रम्यं** मनोहरम् । **दाम** दण्डवेष्टनरज्जुम् । **दधत्** दधानः । [1]'नाभ्यास्ताच्छतु'रिति नुमभावः । **महेशरजतग्रामश्रियः** [2]शिवल्याख्य-ग्रामश्रियः । **अलङ्कृतिः** अलङ्कारभूतः । ननु शिवदेवस्तदलङ्कारोऽस्तु किमनेनेत्यत्रापीद-मेवोत्तरम् । महेशस्य रजतग्रामवत् रजतसमूहवत् या श्रीः अङ्गकान्तिः तस्याः अलङ्कारभूतः । मौक्तिकान्तरितेन्द्रनीलरत्नवदन्तर्यामितया तमपि भासयन्नित्यर्थः । ननु रुद्रस्यान्तर्यामित्वं कृष्णस्य कुत इत्यत्रापीदमेवोत्तरम् । महेशस्य यो रजतग्रामः कैलासः तत्र या श्रीः तस्याः अलङ्कृतिः प्रलये निराकरणं यस्मात् स तथोक्तः । प्रलये शिवस्यापि संहर्तृतया शिवादप्युत्तमत्वाद्धरिरेव तदन्तर्यामीति भावः । **कर्मन्दीश्वरभक्तिबन्धन-वशः** कर्मन्दिनां सन्न्यासिनां ईश्वराः श्रेष्ठाः यतीश्वराः इत्यर्थः । 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः । तेषां·भक्तिबन्धनवशः भक्त्यधीनः । **प्रभुः** कृष्णः । **प्रीतः** सन्तुष्टः **अस्तु** । **उत्प्रेक्षालङ्कारः** । वृत्तं तु **शार्दूलविक्रीडितम्** । 'सूर्याश्वैर्मसजस्ततास्सगुरवः शार्दूल-विक्रीडितम्' इति ॥ ११ ॥

---

[1] पा.सू. (७/१/७८)

[2] शिवळ्ळीति अपभ्रष्टभाषायाम् । – इति सुमध्वविजयभावप्रकाशिकायाम् (२/१०)

**चाञ्चल्यं पृष्ठदेशे(ऽ)कठिणकृतिरधोवक्त्रता क्वापि कोपो**
**याञ्चा कस्मादकस्मादपकृतिरुपकारिष्वपि प्राज्ञमौले ।**
**स्त्र्यर्थेऽन्यस्त्रीष्ववज्ञा किमिति रमण ते(ऽ)चोरता मायिकत्वं**
**चित्रं रोहावरोहाविति विरसगिराऽप्यादृतः पातु कृष्णः ॥ १२ ॥**

तमेव कृष्णं श्लिष्टोक्त्या स्तुत्वा स्वेष्टं च प्रार्थयते – **चाञ्चल्यमिति** । कस्याश्चिद्गोपालबालिकायाः स्वोदासीनदशायामीषदीर्ष्यासहितप्रियोक्तिरियम् । **प्राज्ञमौले** प्राज्ञानां मौलिः श्रेष्ठः हे प्राज्ञमौले रमण । उपरिकथ्यमानविपरीतचरित्रं महाप्राज्ञस्य तव नोचितमिति सूचनायादौ प्राज्ञमौल इति विशेषणमुपात्तम् । **ते** तव । **चाञ्चल्यं** एकदा एकस्यां प्रीतिः पुनस्तां विहायान्यस्यां प्रीतिरित्येवं चञ्चलता । **कस्मात्** कारणात् । निष्कारणमङ्गीकृतपरित्यागस्तव नोचित इति भावः । **पृष्ठदेशे** पृष्ठभागे । **कठिनकृतिः** कठिना च सा कृतिश्च कठिनकृतिः । कठोरं कर्म वा तत्प्रयत्नो वा कस्मात् । निष्कारणं मुखतः प्रियमुक्त्वा पृष्ठदेशे तन्निन्दनादिकं च नोचितमिति भावः । **अधोवक्त्रता** अधः वक्त्रं यस्य स तस्य भावोऽधोवक्त्रता । किमर्थमेवं करोषीति बहुधा कथितेऽति प्रत्युत्तरमदत्वाऽधोमुखतयैव स्थितिः । कस्मात् नोचितेति भावः । **क्वापि** कस्मिंश्चित् समये । **कोपः** क्रोधश्च । कस्मात् कदाचिद्दुरूक्ते सति भक्तायामेवं मयि हुङ्कारादिना क्रोधः क्रियते सोऽपि नोचित इति भावः । **अकस्मात्** कारणाभावेऽपि । **याञ्चा** मां विहाय अन्यस्त्रीप्रार्थनं **कस्मात्** अनुकूलायां सत्यां अननुकूलायाः प्रार्थनं च नोचितमिति भावः । **उपकारिष्वपि** स्त्रीजनेषु । **अपकृतिः** अपकारः कस्मात् । दासीवत् कर्मकर्त्र्यामपि मयि अन्याङ्गनाप्रेरितः सन् वस्त्रभूषणादिकं न ददासि तदपि नोचितमिति भावः । **स्त्र्यर्थे** एकस्त्रीकृते । **अन्यस्त्रीष्ववज्ञा** तत्प्रार्थनादिकं श्रुत्वाऽप्यश्रुत्वेव गमनं कस्मात् तदपि नोचितमिति भावः । **ते चोरता** परवधूप्रियं कृत्वा समागते सति कुत्र गतोऽसीति प्रश्ने आपणं प्रति गतोऽस्मीत्यनृतवचनम् । **किमिति** किमर्थम् । इयमपि नोचितेति भावः । **मायिकत्वं** माया छद्म अस्य वर्तत इति मायी । माय्येव मायिकः तस्य भावो मायिकत्वम्। पराङ्गनालिङ्गनजातनखक्षतादीनां वस्त्रादिनाऽऽच्छादनम् । **कस्मात्** इदमपि नोचितमिति भावः । **रोहावरोहौ** एकस्याः शुभगृहादिदानेन नीचत्वप्रापणं अवरोहः । **इमौ चित्रं**

विचित्रम्। वैषम्यादिदोषरहितस्य तव इमौ च नोचितमिति भावः। **इति** पूर्वोक्तप्रकारेण। **विरसगिराऽपि** विगतो रसः स्नेहः यस्याः सा विरसा सा च सा गीश्च तथा तथाऽपि। अपिपदं गर्हायां अनादरसम्भावनायां वा। **आदृतः** आदरविषयीकृतः। अनया मर्यादैव कृतेति मन्वान इत्यर्थः। एतादृशः **कृष्णः पातु** रक्षतु इति **एका योजना**।

ननु विरसवचनस्य कथं सादरवचनत्वमिति शङ्कायामपि इदमेवोत्तरम्। तथाहि। **चाञ्चल्यं** भूमयीं नावं कृत्वा प्रलयाम्बुनि मत्स्यावतारेण इतस्ततः पर्यटनं कस्मात् कारणात्। **पृष्ठदेशे** कूर्मावतारस्य तव पृष्ठदेशे। **कठिनकृतिः** कठिना कृतिः आकृतिः। पृष्ठदेशे काठिन्यमिति यावत्। यद्वा। कठोरस्य मन्दरगिरेः कृतिर्धारणाख्यं कर्म तद्विषयकव्यापारो वा कस्मात्। **अधोवक्त्रता** अधः वक्त्रं यस्य स तस्य भावोऽधो-वक्त्रता। हिरण्याक्षसंहारार्थं कृतवराहावतारेण अधोमुखत्वम्। अधोमुखवराहावतार इति यावत्। अथवा अधः रसातलं प्रति वक्त्रं यस्य स तस्य भावः कस्मात्। **क्वापि** कस्मिंश्चित् समये। **कोपः** हिरण्यकशिपोरुदरविदारणार्थं कृतनृसिंहावतारस्य। तव कोपः कस्मात्। **अकस्मात् याञ्चा** वामनरूपेण बलेः पदत्रययाञ्चा कस्मात्। **उपकारिषु** धारणपोषणादिना स्वोपकारिषु मातृप्रमुखेषु गुरुदारेषु। अथवा **उपकारिषु** दत्तात्रेय-रूपिणः स्वस्योपकारिषु कार्तवीर्यादिषु। **अपकृतिः** अपकारः शिरश्छेद इति यावत्। कस्मात्। **स्त्र्यर्थं** रामावतारे स्वस्त्रीभूतसीतार्थम्। **अन्यस्त्रीषु** शूर्पणखामण्डो-दर्यादिदैत्यस्त्रीषु। **अवज्ञा** नासिकानिकृन्तनं पतिवधादिना वैरूप्यवैधव्यादिकरणम्। कस्मात्। **चोरता** कृष्णावतारे नवनीतादिचोरता। **किमिति** किमर्थम्। **मायिकत्वं** बुद्धावतारे मायारूपेण[१] दुःशास्त्रवत्त्वम्। तत्प्रवर्तनमिति यावत्। **किमिति** किमर्थम्। **रोहावरोहौ** कल्क्यवतारे अश्वारोहावरोहणचमत्कारौ चित्रम्। इति मम दशावतारेषु विचित्राणां कारणान्येव विचारितवती नत्वाक्षिपतीति मन्वानस्य कृष्णस्य सैव वाक्

---

१ ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम्।
बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति॥ – भागवते (१/३/२४)

देवद्विषां निगमवर्त्मनि विष्ठितानां पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः।
लोकान् घ्नतां मतिविमोहमतिप्रलोभं वेषं विधाय बहु भाष्यत औपधर्म्यम्॥
– भागवते (२/७/३७)

सादरवागभूत् । अर्थलब्धस्तुत्यङ्गभूतत्वात् । एवमनुकूलार्थस्यैवोद्भावनेन स्वस्तुतिरूपं सम्बोधनद्वयबीजमिति द्रष्टव्यम् । इति **द्वितीया योजना ।**

अथवा **चाञ्चल्यं** व्याप्तस्यैव तव इतस्ततो गमनागमनाख्यम् । श्वेतद्वीपे तव दिदृक्षयैवागतानां वक्षसि सकृत् स्थित्वा तदा तत्रैव ततश्चलनाख्यां विश्वरूपाख्यस्थूल-मूर्त्यात्मकदृग्गोचरतया स्थितस्य तव सूक्ष्ममूर्त्या ततश्चलनाख्यां चाञ्चल्यम् । कुवलयापीडाख्यमहागजस्य कदाचित् पृष्ठतः कदाचित् पार्श्वतः कदाचिदुरसो भागे कदाचिदग्रतः सञ्चारचातुर्याख्यं चाञ्चल्यं **चित्रम्** । **ईशे** भस्मासुरकृतोपद्रवात् भीत्या पृष्ठभागं प्राप्ते महादेवे । **पृष्ठद** पृष्ठं ददातीति पृष्ठदः तस्य सम्बुद्धिः । पृष्ठ एव तिष्ठेति स्थापयित्वा तयोर्मध्ये स्थित इति भावः । तव **अकठिनकृतिः** मृदुवचनव्यापारः प्रियोक्त्या वशीकरणमित्यर्थः । पुनः कठिना अतिक्रूरभस्मासुरभस्मीकरणरूपा कृतिः कर्म च । ईशे ईशरूपे शेषे पक्षिणामीशे गरुडे वा । पृष्ठद हे कृष्ण ते । कठिनकृतिः शेषाङ्गे शयानस्यैव महीधरादिकठिनजगत्करणम् । गरुडकण्ठे स्थितस्य चातिक्रूरमहादैत्यसंहारकरणम् । मेषरूपतया वाहिनीभूतस्वपृष्ठदे ईशे महादेवे स्थितस्य । तादर्थ्ये वा सप्तमी । ईशार्थ-मित्यर्थः । मेषरूपशङ्करवाहनभूतस्य तव कठिनकृतिः [२]'दुष्टशक्तिसहस्रभुगि'त्युक्त-योगिनीसंहारकर्म । **कठिनकृतिः** योगिनीत्रस्तगिरीशत्रातृत्वरूपं स्वकर्मचरित्रम् । **अधोवक्त्रता** शिंशुमाररूपस्य तव सूर्यचन्द्रनक्षत्रग्रहात्मकज्योतिश्चक्रधारणायाधोमुखता साऽपि चित्रम् । जराव्याधभृगुशुक्रकालीयादिभक्तानामपि कुत्रचिदभक्तवदपराध-साम्येऽपि । **क्वापि** अभक्तेष्वेव किञ्चित्कोपः भक्तेषु कोपोऽपि क्व । इदं पृष्ठद याञ्चा तव रुद्रादियाञ्चा कस्मात् । न कस्मात् कारणात् । किन्तु **अकस्मादेव** लीलयैव कारणं विनैव । रुद्ररक्षकस्य तव पुत्रार्थं रुद्रार्चनयाञ्चादिकं लीलयैवेति भावः । **उपकारिष्वपि** जगत्सर्जनदशायामुप स्वसमीपे स्थित्वा कारिषु कारणभूतेषु देशकालप्रकृत्यादिषु । **अपकृतिः** [१]'किंस्विदासीदधिष्ठान'मित्यादिश्रुत्युक्तमार्गेण धिक्काराख्यापकारः । अप्रधानतया स्वस्मादधःकरणमिति यावत् । नित्यानामपि तेषां पराधीनविशेषावाप्त्यादि-रूपजननमरणाद्यपकारश्च चित्रम् । **अर्थे** कस्मिंश्चित् प्रयोजने सति । अमृतपरिवेषण-

---

१ ऋग्वेदे - १०/८१/२ ; २. इति वासुदेवसहस्रनामस्तोत्रे (पद्मपुराणे)

कार्यायेत्यर्थः । तादर्थ्ये सप्तमी । या स्त्री नारायणी सा चित्रम् । **अन्नी** देवानां परिवेषणसमये अमृताख्यान्नवांस्त्वम् । **अस्त्री** तदैव राहोः शिरश्छेदायास्त्रवान् । दर्वीमेवास्त्रमकरोः तच्च । **इष्ववज्ञा** शार्ङ्गशराद्यनपेक्षा च चित्रम् । तथा **अन्यस्त्रीष्ववज्ञा** अन्निनां अन्नेनोदरम्भराणाम्। *'रिपवोऽन्नेषु जागृधुः' इति श्रुतेः । नानास्त्रवतां दैत्यानां इषुषु शरसङ्घातेषु अवज्ञा तृणीकरणम् । अन्यासां स्वनारयण्याख्यस्त्रीरूपाद्विलक्षणानाम् । तादृशलावण्यरहितानामित्यर्थः । स्त्रीणामष्टमहामहिषीणां षोडशसहस्रपत्नीनां गोपीनां च । **इष्ववज्ञा** कटाक्षपाताख्यशरावज्ञा । तैः स्वमनोभङ्गाभाव इत्यर्थः । **कस्माच्चित्रम्** । 'न स्त्रीकृतं कश्मलमश्नुवीते'ति[१] स्मृतेर्न चित्रमित्यर्थः । नहि परमान्नरसं भुञ्जानस्य कदन्नरसे राग उदेतीति भावः । अथवा **अन्निन** अन्नदातुर्जरासन्धस्य विद्यमानेषु **अस्त्रीषु** स्त्रीविलक्षणेषु पुरुषरूपेष्वित्यर्थः । स्त्रीवैलक्षण्येनैव पुंस्त्वं नतु पौरुषं किञ्चिदपीति भावः । यद्वा **अस्त्रीषु** अस्त्रवत्सु [२]त्रयोविंशदक्षौहिणीपरिमितेषु । **इषुभिः** स्वशरसमूहैः । **अवज्ञा** सर्वाङ्गपूरणेन तृणीकरणम् ।

> 'एकैकस्मिन् दश दश भटे चाश्वे शतं शतम् ।
> रथे रथे सहस्रं च अयुतं च गजे गजे ॥

इति स्मृतेः । सा चित्रम् । **ते चोरता** अनन्तजन्मपापतस्करत्वम् । 'प्रसिद्धचोरः कथितः पृथिव्याम्' इति [३]स्मृतेः । **किमिति** किमर्थं कस्मै प्रयोजनायेत्याक्षेपः । भक्तेषु कृपयैव तत्पापं संहरतीति भावः । **अचः** अकारादिषोडशस्वराः । **अरताः** अकारसम्बद्धाः । अकारसाहित्यनियमवन्तः कादयो हलश्च । एवं एकपञ्चाशदक्षरात्मकश्रुतिपुराणशास्त्राणीत्यर्थः । **ते** तव **कस्मात्** पुरुषात् न कस्मादपि पुरुषात् त्वया पाठिताः किन्तु स्वशक्त्यैव तानुच्चारयसि करोषि चेति भावः । अथवा । तव जिह्वायां परिवर्तमानाः

---

१ भागवते (५/१९/६) ; * ऋग्वेदे (२/२३/१६)

२ अक्षौहिणीत्र्यधिकविंशयुतोऽतिवेलं
दर्पोद्धतस्सपदि कृष्णपुरीं जगाम ॥ – महाभारततात्पर्यनिर्णये (१४/१५)

३ नारायणो नाम नरो नराणां **प्रसिद्धचोरः कथितः पृथिव्याम्** ।
अनेकजन्मार्जितपापसञ्चयं हरत्यशेषं स्मृतमात्र एव ॥ – कृष्णामृतमहार्णवे (४८)

अन्त्रो हलश्च चित्रम् । अनन्तश्रुतिस्मृतिरूपत्वादाश्चर्यमिति भावः । **अमायिकत्वं** मायामयशरीरादिषु वर्तमानस्यापि तव मायालेपाभावेनैव यदमायिकत्वं तत् । यद्वा **मायाः** लक्ष्म्याः सकाशात् **आयः** अस्य वर्तत इति मायी । **कः** पूर्णसुखरूपः । मायी चासौ कश्च मायिकः तस्य भावः मायिकत्वम् । लक्ष्म्या सह विनोदकरणं चेति भावः । इदं चित्रम् । **रोहावरोहौ**[1] अनन्तजीवराशिषु योग्यानां मुक्तिपदारोहणं **रोहः** । अयोग्यानां अन्धे तमसि **अवरोहः** । मिश्राणां स्वर्गनरकादौ **रोहावरोहौ** च । इति रोहावरोहौ तवाधीनौ । तेषामुक्तविधया त्रिविधरोहावरोहौ च **चित्रं** अनन्तानन्तजीवेष्वपि कदाचित् क्वचित् व्यत्यासाभावादाश्चर्यमित्यर्थः । अथवा, ते रोहावरोहौ ।

'प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ।।

– इति [2]भागवते वर्णितो रोहः । स्वदिव्यदेहेन सहैव स्वर्गारोहणम् ।

'ब्रह्मा भवश्च तत्रेत्य मुनिभिर्नारदादिभिः ।
देवैः सानुचरैः सार्धं गीर्भिर्विष्णुमथास्तुवन् ।।'

– इति [3]श्रीभागवतोक्तरीत्या गर्भस्थशिशुभावेऽपि ब्रह्मादिभिरभिष्टुतस्य तव ।

'तदा वां परितुष्टोऽहममुना वपुषाऽनघे ।
प्रादुरासं वरदराड् युवयोः कामदित्सया ।।'

– इति [4]श्रीभागवते भगवद्वचनेनैव कृष्णावतारात् प्रागपि विद्यमानतया प्रत्यभिज्ञायमानेनानादिभूतदिव्यदेहेनैव अवरोहः अवतारश्च । इति यौ **रोहावरोहौ** तावपि **चित्रम्** । प्राकृतपुरुषान्तरे ईदृङ्महिमादर्शने नाश्चर्यमिति योजना । **इति विरसगिरा**

---

[1] शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ।।
– इति महाभारततात्पर्यनिर्णयोदाहृत(१/९९)श्रुतिः; ऋ.(६/४७/१६);
ऋ. १०/८१/२; वा.य.१७.१८; तै.सं ४,६,२,४)

[2] भागवते ३/२/११ [3] भागवते १०/२/२५ [4] भागवते १०/३/३७

विशेषेण रसः अध्यात्मज्ञानरसः यस्यां सा विरसा । सा च सा गीश्च तया विरसगिरा । दशावताराख्यरसभरितगिरा । इदानीमुक्तरीत्या रसभरितगिरेत्युभयसङ्ग्रहार्थमपि पदम् । **आदृतः श्रीकृष्णः** **पात्विति** तृतीया योजना ।

विस्तरस्त्वस्य पद्यस्य गुरुमुखादेव श्रोतव्यः । तदीयकौशलसमुद्राल्लेशमात्रं प्रदर्शितम् । तदपि तच्छिक्षयैव नोत्प्रेक्षया ॥ १२ ॥

**रूप्यात्मकामरपुरःसर सन्निरूप्य**
**रूप्यात्मकं च भवतः कृपया गतस्य ।**
**रूप्यात्मकालयकृतालय यत् त्वमेव**
**रूप्यात्मनो गतिरिहापि तदीश पाहि ॥ १३ ॥**

पुनरपि स्वकीयस्वाप्नपद्येन तमेव कृष्णं स्तौति – **रूप्यात्मकेति** । **रूप्यात्मकामरपुरःसर** । रूप्यः रूपयितुं योग्यः । रूपकालङ्कारे प्रतिपादयितुं योग्य इत्यर्थः । आत्मा स्वरूपं येषां ते रूप्यात्मकाः । स्वार्थे कप्रत्ययः । ते च ते अमराश्च रूप्यात्मकामराः । ऐश्वर्ये इन्द्रः । व्याख्याने शेषः । सौन्दर्ये कन्दर्पः । धने कुबेरः । विद्यायां गिरीशः । वेदे चतुर्मुखः । इति प्रौढं सौभाग्यं कश्चन महापुरुषं स्तुवन्तः कवयो वर्णयन्ति । 'एकत्वरूपणं यत्स्यादुपमानोपमेययोः । रूपकं नाम तच्च' इति वचनात्, इमानि वाक्यानि रूपकालङ्कारबद्धानि । तत्र चोक्तरीत्या ब्रह्मादिदेवानामेव निरूपणादिति भावः । तेषां पुरःसरः श्रेष्ठस्तस्य सम्बुद्धिः । **सन्निरूप्य** सद्भिर्निरूप्यस्तस्य सम्बुद्धिः । हे **रूप्यात्मकालयकृतालय** रजतपीठपुरस्थदेवालये कृतमन्दिर हे **ईश** स्वामिन् कृष्ण । **यत्** यस्मात् कारणात् । **भवतः** । [1]**कृपया** **रूप्यात्मक** रूपी मुक्तौ प्रशस्तनिजरूपवान् । प्राशस्त्ये मतुपोऽनुशासनात् । 'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतेश्च । आत्मा जीवः [2]मुक्तजीव इत्यर्थः । तस्य योग्यं कं सुखम् । गतस्य च प्राप्तस्य

---

१ जिज्ञासोत्थज्ञानजात् तत्प्रसादादेव मुच्यते ॥ – अनुव्याख्याने

२ बलमानन्द ओजश्च सहोज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ॥ – सूत्रभाष्योदाहृत(२/३/३१)गौपवनश्रुतिः

च। मौक्तस्वयोग्यमहासुखमनुभवत इत्यर्थः । **आत्मनः** मुक्तजीवसमुदायस्य । त्वमेव गतिः इति प्रमेयं **रूपी** * 'मुक्तानां परमागतिः' इत्यादिवचनैर्निरूपितम् । **तत्** तस्मात् । **इहापि** संसारेऽपि । **पाहि** रक्षेति योजना । सकलदेवोत्तमत्वात् मुक्तानां गतित्वाच्च हरिरेव संसारेऽपि गतिरित्येवं प्राध्र्य इति भावः ।। १३ ।।

**अनन्तेश्वरः(अनन्तासनः)**

**शिवान्तर्यामितां स्वीयां प्रियान् प्रति निबोधयन् ।**
**दयावारिनिधिः शैर्वी शिलामाश्रित्य शोभते ।। १४ ।।**

रजतपीठपुरस्थितमनन्तेश्वरदेवं[१] वर्णयति । **शिवान्तर्यामितामिति** । **दयावारिनिधिः** । दयया कृपया वारिनिधिः समुद्रः श्रीकृष्णः । **स्वीयां** स्वस्य विद्यमानाम् । **शिवान्तर्यामितां** रुद्रान्तर्यामित्वम् । 'शिवरूपी शिवे स्थितः' इति [२]स्मृतेः । **प्रियान्** भक्तान् । **प्रति निबोधयन्** सन् **शैर्वी** शिवस्य विद्यमानां लिङ्गाकृतिमित्यर्थः । **शिलामाश्रित्य** अधिश्रित्य । **शोभते** लिङ्गाकृतिरप्यनन्तासन इति प्रथया विराजते । 'शुभ शोभायाम्' इति धातोर्लट् ।। १४ ।।

**ईशस्याहीशपदवीं भासयन्निव भाविनीम् ।**
**अध्यास्ते शेषशयनः स्निग्धां लिङ्गशिलां हरिः ।। १५ ।।**

**ईशस्येति** । **शेषशयनः** अनन्तशायी **हरिः** । **ईशस्य** शिवस्य । **भाविनीं** आगामिनीम् । **अहीशपदवीं** शेषपदवीं 'रुद्रः शेषात्मकः'[३] इति वचनात् । **भासयन्**

---

१ रजतपीठपुरस्थस्य नारायणत्वं निश्चीयते –

स्वदर्शनोरुव्रतिने निशीथे प्राप्ताय भोगीन्द्रगतो हरिः प्रभुः ।
स्वं दर्शयित्वा खलु कुञ्जमाधवद्विजाय तद्वत्प्रतिमां न्यधापयत् ।।

– इति सुमध्वविजयभावप्रकाशिकायाम् (२/१५)

भेजे **भुजङ्गशयनं** द्विषडब्दकालम् ।। – सुमध्वविजय (२/१९)

२ ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः । – विष्णुपुराणे; * विष्णुसहस्रनामसु

**प्रकाशयन्निव** । **स्निग्धां** मनोहराम् । **लिङ्गशिलां** लिङ्गाकारशिलाम् । **अध्यास्ते** लिङ्गशिलायां तिष्ठतीत्यर्थः । शेषशयनस्य शिवलिङ्गशायित्वे शिवस्य शेषात्मकत्वं प्रकाशितं भवतीति भावः ॥ १५ ॥

### पाजकक्षेत्रम्

**पवित्रं पाजकक्षेत्रं को न सेवेत कोविदः ।**
**सत्यलोकेश्वरः प्राणो यत्रावातरदुत्सुकः ॥ १६ ॥**

पाजकक्षेत्रं वर्णयति । **पवित्रमिति** । **पवित्रं** पावनम् । **पाजकक्षेत्रं** पाजकाख्य-क्षेत्रम् । **कः कोविदः** विद्वान् । **न सेवेत** नाश्रयीत । सेवेतैवेत्यर्थः । 'सेवृ सेवायाम्' इति धातोर्लिङ् । **यत्र** पाजकक्षेत्रे । **सत्यलोकेश्वरः** सत्यलोकाधिपतिः । **प्राणः** मुख्यप्राणः । **उत्सुकः** सन् **अवातरत्** मध्वाचार्यरूपेणावततार । 'तॄ प्लवनतरणयोः' इति धातोर्लङ् । सत्यलोकेश्वरस्य मुख्यप्राणस्य तस्मिन्नवतर्तुमौत्सुक्यस्य कारणात्[४] पाजकक्षेत्रस्य महिमा किं वर्णनीय इति भावः ॥ १६ ॥

### विमानगिरिस्था दुर्गा

**परश्वधधनुर्बाणगदातीर्थोपशोभिते[५] ।**
**गिरौ यत्र सुतप्रेम्णेवास्ते नित्यं हरिस्वसा ॥ १७ ॥**

---

३ रुद्रः शेषात्मकः' – म.भा.ता.नि. (१/१४)
'एको रुद्रस्तथा शेषः' – म.भा.ता.नि (१/७४)

४ ईशेन्द्रादिसुरेन्द्राणामीशः श्रीरमणप्रियः ।
यत्र प्रादुरभूद्वायुः क्षेत्रं तत् **पाजकं** शुभम् ॥
जडस्य गङ्गाद्यभिधस्य केवलं तीर्थस्य मूलं हिमवन्नगाधिपः ।
मत्सौख्यतीर्थस्य जडेतरस्य वै मूलं पवित्रं तदतीव **पाजकम्** ॥ – सम्प्रदायपद्धतौ (१,२)

रामाधिवेशितहरिस्वसृमौलिमालाराजद्विमानगिरिशोभितमध्युवास ।
क्षेत्रं स **पाजकपदं** त्रिकुलैककेतुः कं यद्दधाति सततं खलु विश्वपाजात् ॥
- सुमध्वविजये (२/११)

तत्र विमानगिरिस्थां दुर्गां वर्णयति । **परश्वधेति** । **परश्वधधनुर्बाणगदातीर्थोपशोभिते** गिरेश्चतुर्दिक्षु श्रीपरशुरामकृतैः परश्वधधनुर्बाणगदातीर्थैः उपशोभिते अलङ्कृते । **यत्र** पाजकक्षेत्रे । **गिरौ** विमानाख्यपर्वते । **हरिस्वसा**[६] **दुर्गा** । [७]**सुतप्रेम्णेव** सुते श्रीमदाचार्यरूपे वायौ प्रेम्णेव स्नेहेनैव । **नित्यमास्ते** तस्मिन् पर्वते परशुरामस्थापितदुर्गा तिष्ठतीत्यर्थः । **उत्प्रेक्षालङ्कारः** ॥ १७ ॥

**त्रिशूलधारिणी दैत्यगजकुम्भविदारिणी ।**
**गिरीन्द्रशिखरावासा दुर्गा स्वर्गापवर्गदा ॥ १८ ॥**

**त्रिशूलेति** । **त्रिशूलधारिणी** त्रिशूलधरा । **दैत्यगजकुम्भविदारिणी** दैत्यो महिषासुरः स एव गजः तस्य कुम्भो मस्तकदेशस्तं विदारयतीति तथोक्ता । **गिरीन्द्रशिखरावासा** गिरीन्द्रस्य विमानाख्यपर्वतश्रेष्ठस्य शृङ्गे आवासो यस्याः सा । **दुर्गा स्वर्गापवर्गदा** भक्तानां स्वर्गं अपवर्गं[८] मोक्षं च ददातीति तथोक्ता ॥ १८ ॥

**प्रलये जलदुर्गाऽसि सर्गादौ गिरिविस्तृतिः ।**
**इदानीं स्थलदुर्गाऽसि दुर्गे त्वं सद्गुणार्णवे ॥ १९ ॥**

---

५ यत्रत्य तीर्थेषु निमज्जतां सतां धर्मश्चतुर्भिश्चरणैः सहैधते ।
इति प्रबोधाय चकार माधवश्चत्वारि तीर्थानि भृगोः कुलोद्भवः ॥
परश्वादीन्यायुधानि यथा पापहराणि वै ।
तीर्थानि च तथेत्येवं बोधयन्त्यभिधा इमाः ॥ – सम्प्रदायपद्धतौ (३,४)

६ 'शूरतातसुतस्य वैश्याप्रभवोऽथ गोपः' इति वचनात् (म.भा.ता.नि. ११/२२८) वसुदेवनन्दगोपौ भ्रातरौ । अतः नन्दगोपपुत्री दुर्गा हरिस्वसा ।

७ 'दशप्रमतिं जनयन्त योषणः'–श्रीभूदुर्गाख्याः ऋगादिवेदाभिमानिन्यो देव्यः स्वाभिमन्यमानवेदानामन्यैरन्यथा व्याख्यातत्वात् यथावद्व्याख्यानाय मध्यगेहाख्यविप्रपत्न्याः उदरे स्थित्वा अजनयन्तेति भावः। – श्रीवादिराजतीर्थाः (म.भा.ता.नि.भावप्रकाशिकायाम् - २/१५७)

८ श्रियं वसाना अमृतत्वमायन् । – श्रुतिः
विश्वस्थितिप्रळयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः ।
यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीः ... ॥ – द्वादशस्तोत्रे (७/१)

राजन्यरचितजलगिरिस्थलदुर्गसाम्याद् दुर्गायाः दुर्गात्वमुपपादयन्नाह – **प्रलय** इति। **सद्गुणार्णवे** सन्तो निर्दुष्टाः गुणाः ज्ञानादय एव। स्वच्छत्वादर्णांसि जलानि अस्याः सन्तीति सद्गुणार्णवा। तस्याः सम्बुद्धिः। **प्रलये जलदुर्गाऽसि**। प्रलयकाले दुर्गादेवी प्रलयार्णवरूपेण तिष्ठतीति भागवतोक्तेः। अनेन जलदुर्गत्वमुपपादितम्। **सर्गादौ** सृष्टिकाले। **गिरिविस्तृतिः** गिरि वाचि वेद इत्यर्थः। विस्तृतिर्विस्तारो यस्याः सा। 'तत्पुरुषे कृति बहुलम्'[1] इति बहुलोक्तेः सप्तम्या अलुक्। सर्गादौ दुर्गा वेदवाक्यैः परमात्मानं स्तौतीति[2] भागवतोक्तेरिति भावः। गिरौ पर्वते विस्तृतिः विस्तारोऽस्य दुर्गस्येति समासे सति गिरिविस्तृतिरिति शब्दसाम्याद्गिरिदुर्गत्वमनेनोपपादितम्। **इदानीं स्थलदुर्गाऽसि** अस्मिन् स्थले दुर्गा नाम्ना वर्तसे। तत्र वर्तमानगिरेरल्पत्वाद्वा पुण्यक्षेत्रत्वाद्वा स्थलत्वोक्तिः। तस्मात्त्वयि **दुर्गात्वं** उपपद्यत इति भावः। **अथवा** सर्गादौ विमानगिरिस्थलदुर्गास्थानस्य सर्ग एव आदिर्यस्य प्रतिष्ठापूजादेः स सर्गादिः तस्मिन् वर्तमाने सति गिरौ विमानपर्वते विस्तृतिः। महिम्नां विस्तारो यस्याः सा तथोक्ता। **इदानीं** तीर्थप्रबन्धकरणसमये। **स्थलदुर्गा** भक्तस्य मम सप्तधात्वावृतहृदयगुहाख्यस्थले दुर्गा। अस्मिन् पक्षे स्पष्टं गिरिदुर्गत्वं चाभूदिति भावो द्रष्टव्यः॥ १९॥

**दुर्ज्ञेयत्वाद्दुःखगत्वाद्दुष्प्राप्यत्वाच्च दुर्जनैः।**
**सतामभयभूमित्वाद् दुर्गा त्वं हृद्गुहाश्रयात् ॥ २० ॥**

अधुना दुर्गात्वं निर्वक्ति – **दुर्ज्ञेयत्वादिति**। **दुर्ज्ञेयत्वात्** दुःखेनायासेन गम्यते ज्ञायत इति दुर्गा। गम्यर्थकधातोर्ज्ञानार्थकत्वात्। तस्मात् **दुर्गा**। 'ब्रह्मादयो बहुतिथं यदपाङ्गमोक्षकाङ्क्षाः' इति [3]भागवतोक्तेः। **दुःखगत्वात्** दुःखं गमयति दुर्जनान् प्रापयतीति व्युत्पत्तेरिति भावः। [4]**दुर्जनैः दुष्प्राप्यत्वाच्च** दुःखेनापि गन्तुं अयोग्येति व्युत्पत्ते-

१ पा.सू. (२/३/८) २. भागवते (१०/८७/१८)

३ भागवते (१/१६/३३)

४ दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥ – इति भगवद्गीतायाम् (७/१४)

रिति भावः । **सतां** ज्ञानिनाम् । **अभयभूमित्वात्** अभयस्य भूमिः स्थानम् । वैकुण्ठादि-लोकत्रयम्[१] । तद्रूपत्वान्मोक्षकारणत्वादित्यर्थः । शत्रुभयपरिहाराय रचितस्थलविशेषस्य दुर्गपदाभिधेयत्वादिति भावः । **हृद्गुहाश्रयात्** नियामकतया सर्वहृदयगुहाश्रयात् । **त्वं दुर्गा** [२]'अर्शआदिभ्योऽच्' इति दुर्गवती दुर्गेति व्युत्पत्तिरुक्ता भवति । दुर्गमस्थान-स्थितत्वादिति भावः । एवमुक्तनिमित्तचतुष्टयाद् दुर्गाभिधेयत्वं युक्तमिति भावः । अनेन दुर्गायाः दुर्ज्ञेयत्वादिमाहात्म्यं वर्णितं बोध्यम् ।। २० ।।

### पाजकक्षेत्रसमीपस्थः विश्वनाथः

**रक्षोगणक्षपणदक्षमहात्रिशूलं त्र्यक्षं वलक्षतनुमुल्लसदक्षमालम् ।**
**रूक्षाघशिक्षणविचक्षणशक्तियूथं दक्षाध्वरक्षयदमाश्रय विश्वनाथम् ।।२१।।**

पाजकक्षेत्रमध्यवाटयोर्मध्ये विश्वनाथक्षेत्रं प्रसिद्धं तत्रत्यं विश्वनाथं वर्णयति – **रक्ष** इति । **रक्षोगणक्षपणदक्षमहात्रिशूलं** रक्षसामन्धकासुरादिमहाराक्षसानाम् । गणस्य समूहस्य । क्षपणे नाशने । दक्षं समर्थं । महत् त्रिशूलं यस्य स तथोक्तस्तम् । **त्र्यक्षं** त्रिनेत्रम् । **वलक्षतनुं** वलक्षा धवला तनुः यस्य स तथोक्तस्तम् । 'वलक्षो धवलोऽर्जुन' इत्यमरः । **उल्लसदक्षमालं** उल्लसन्ती शोभमाना अक्षमाला जपमाला यस्य स तथोक्तस्तम् । **रूक्षाघशिक्षणविचक्षणशक्तियूथं** रूक्षाणां क्रूराणां महादुःखप्रदत्वेन असह्यानां अघानां पापानां शिक्षणे निरसने विचक्षणः समर्थः शक्तियूथः सामर्थ्यसमूहो यस्य स तथोक्तस्तम् । **दक्षाध्वरक्षयदं** दक्षस्य अध्वरो यज्ञस्तस्य क्षयदं नाशप्रदम् । **विश्वनाथं** तन्नामकं रुद्रम् **आश्रय** सेवस्व स्वचित्तादिसाधुवर्गं सम्बुद्ध्यैतद्वचनम् ।।२१।।

---

[१] श्रीरेव लोकरूपेण विष्णोस्तिष्ठति सर्वदा ।
अतो हि वैष्णवा लोका नित्यास्ते चेतना अपि ।। – गीतातात्पर्यनिर्णयः (१८/६३)

त्रिधामधामरूपेण या मुक्तिरिति कीर्त्यते ।। – सरसभारतीविलासः (३/१३)

[२] पा.सू. (५/२/१२)

**अङ्गानुषङ्गतभुजङ्गमतुङ्गभोगं गङ्गातरङ्गकृतमङ्गलमौलिभागम् ।**
**सङ्गीतलोलयतिपुङ्गवगीतगाथं तं गौर्यपाङ्गरसमाश्रय विश्वनाथम् ।।२२।।**

अङ्गेति । **अङ्गानुषङ्गतभुजङ्गमतुङ्गभोगं** अङ्गेषु अवयवेषु अनुषङ्गताः सम्बद्धाः । भुजङ्गमानां सर्पाणां तुङ्गा उन्नता भोगा देहा यस्य स तथा तम् । 'अहेः शरीरं भोगः स्यात्' इति हलायुधः । **गङ्गातरङ्गकृतमङ्गलमौलिभागं** गङ्गाया जाह्नव्याः तरङ्गैरूर्मिभिः कृतमङ्गलः सम्पादितशोभनः मौलिभागो यस्य स तथा तम् । 'तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत्'[1] इति वचनात् । **सङ्गीतलोलयतिपुङ्गवगीतगाथं** सङ्गीते गान्धर्वविद्यायां लोलैः रसिकैः यतिपुङ्गवैः यतिश्रेष्ठैः गीता गाथा त्रिपुरसंहारादिकथा यस्य स तथोक्तस्तम् । **गौर्यपाङ्गरसं** गौर्याः पार्वत्याः अपाङ्गस्य कटाक्षस्य रसः सारभूतस्तम् । गौर्या सादरं निरीक्षित इत्यर्थः । **तं विश्वनाथं आश्रय** सेवस्व ।। २२ ।।

**इन्द्रादिदेवगणवन्दितपादपद्मं चन्द्रार्धचूडमरविन्ददलायताक्षम् ।**
**कन्दर्पवैरिणमनिन्द्यममन्दबोधं तं देवदेवमिममाश्रय विश्वनाथम् ।।२३।।**

इन्द्रादीति । **इन्द्रादिदेवगणवन्दितपादपद्मं** इन्द्रादिदेवसमूहनतचरणारविन्दम् । **चन्द्रार्धचूडं** चन्द्रार्धो भालचन्द्रः चूडायां केशबन्धे यस्य स तथा तम् । **अरविन्द-दलायताक्षं** पद्मदलवत् आयते अक्षिणी यस्य स तथा तम् । **कन्दर्पवैरिणं** मन्मथशत्रुम् । **अनिन्द्यं** गर्हाया अयोग्यम् । **अमन्दबोधं** अमन्दः पूर्णः ज्ञानं यस्य स तथा तम् । **देवदेवं** देवानामिन्द्रादीनामपि दैवतम् । तमिमं **विश्वनाथं आश्रय** सेवस्व ।। २३ ।।

**वन्दारुनारदसनन्दनमुख्ययोगिवृन्दैः प्रवन्द्यचरितैः परितश्च सेव्यम् ।**
**इन्दिन्दिरोपमसितेतरकण्ठकान्तिं सौन्दर्यमूर्तिममुमाश्रय विश्वनाथम्[2] ।।२४।।**

---

[1] यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत् ।।
– भागवते (३/२८/२२)

[2] अष्टाविंशल्लक्षणास्तु गिरीशपदयोगिनः । – बृहद्भाष्ये

**वन्दार्विति** । **प्रवन्द्यचरितैः** स्तुतचरित्रैः । **वन्दारुनारदसनन्दनमुख्ययोगिवृन्दैः** वन्दारवो वन्दनशीलाः । 'शृवन्द्योरारुः'[१] इत्यारुप्रत्ययः । ते च ते नारदसनन्दनमुख्याश्च ते योगिनश्च तेषां वृन्दैः समूहैः **परितश्च** समन्तादपि । **सेव्यं** । **इन्दिन्दिरोपमसितेतरकण्ठकान्तिं** । इन्दिन्दिरो भ्रमरः । 'इन्दिन्दिरश्चञ्चरीक' इति धनञ्जयः । तेन उपमा सादृश्यं यस्याः सा तथोक्ता । सिताात् शुभ्रात् इतरा नीला कण्ठस्य कान्तिर्यस्य स तथा तम् । **सौन्दर्यमूर्तिं** लावण्ययुक्तदेहम् । **अमुं विश्वनाथं आश्रय** सेवस्व ।। २४ ।।

**छन्दश्चयस्तुतचरित्र पुरत्रयारे कुन्दप्रसूनकृतसेवनतृप्तचित्त ।**
**त्वां दीनबन्धुमरुणेन्दुलसत्कपर्दं वन्देऽरिमर्दन सुहृद्धन [२]विश्वनाथ।।२५।।**

छन्द इति । **छन्दश्चयस्तुतचरित्र** छन्दसां श्रीरुद्रादिवेदानां चयेन समूहेन स्तुतचरित्र प्रशस्तचरित्र । **पुरत्रयारे** त्रिपुरशात्रो । **कुन्दप्रसूनकृतसेवनतृप्तचित्त** कुन्दप्रसूनैः

---

१ पा.सू. (३/१०/८)

२. गङ्गाधरं जटाजूटविन्यस्तेन्दुकलोज्ज्वलम् ।
पीतश्वेतारुणहरिच्छ्यामाननसरोरुहम् ।।
त्रिनेत्रपङ्क्त्या लसितपञ्चवक्त्रं शुचिस्मितम् ।
ऊर्ध्वपुण्ड्रधरं चक्रशङ्खाङ्कितभुजद्वयम् ।।
पद्माक्षतुलसीमालाविद्योतितशिरोधरम् ।
नीलग्रीवं लसद्रत्नभास्वराहीशभूषणम् ।।
मृगशूलवराभीतिहस्तं स्फटिकसन्निभम् ।
गौरीमनोहरतनुं गौरनन्दीशवाहनम् ।।
सदाध्यातृबुधाभीष्टप्रदानैकधुरन्धरम् ।
हरेः प्रियं ध्यानरतं स्मराम्यघहरं हरम् ।।
गिरीन्द्रवास गौरीश पुरनाश सतां वश ।
फणीन्द्रभूष निर्दोष मम तोषकरो भव ।।
शूरत्रिशूलधर मारमदापहार वीरासनस्थ विधिपुत्र विशालनेत्र ।
धीर्मेऽस्तु दीनशरणे दिननाथदीप्तौ क्रूरासुरोदरविदारणनारसिंहे ।।
– इति सरसभारतीविलासे (२/३५-४१)

कुन्दपुष्पैः कृतसेवनेन कृतपूजया तृप्तं मनो यस्य तत्सम्बोधनम् । **अरिमर्दन** शत्रुसंहारिन् । **सुहृद्धन** सुहृदां भक्तानां धनरूप निक्षेपरूप । **हे विश्वनाथ** । **दीनबन्धुं** अनाथबन्धुम् । **अरुणेन्दुलसत्कपर्दं** अरुणेन्दुना रक्तवर्णचन्द्रेण लसन् शोभमानः कपर्दः जटाबन्धो यस्य स तथा तम् । 'कपर्दोऽस्य जटाजूटः' इत्यमरः । **त्वां वन्दे** नमामि ॥ २५ ॥

**नन्दिकेश्वरः**

**सुचारुकर्णलाङ्गूलभृङ्गाङ्घ्र्युदरदङ्मुखम् ।**
**ककुद्मन्तं वृषं श्वेतं नौमि शङ्करवाहनम्**[१] **॥ २६ ॥**

तत्रत्यं नन्दिकेश्वरं वर्णयति । **सुचार्विति** । **सुचारुकर्णलाङ्गूलभृङ्गाङ्घ्र्युदरदङ्मुखं** कर्णौ च लाङ्गूलं च शृङ्गे च अङ्घ्रयश्च उदरं च मुखं च तानि सुचारूणि सुष्ठु मनोहराणि कर्णलाङ्गूलभृङ्गाङ्घ्र्युदरदङ्मुखानि यस्य स तथा तम् । **ककुद्मन्तं** । ककुत् स्कन्धोपरि ऊर्ध्वाकारेण परिणतमांसग्रन्थिरस्यास्तीति ककुद्मान् तम् । **श्वेतं शङ्करवाहनं वृषं नौमि** स्तौमि । 'णु स्तुतौ' इति धातोर्लट् ॥ २६ ॥

**मध्यवाटाख्यं श्रीवेदव्यासस्थानम्**

**भवघर्मभवार्तिघ्नः स मठः सेव्यतां सता ।**
**कृष्णद्वैपायनघनो यत्रागाद्वायुवर्त्मना ॥ २७ ॥**

मध्यवाटाख्यं वेदव्यासस्थानं वर्णयति – **भवघर्मेति** । **कृष्णद्वैपायनघनः**[२] ज्ञानानन्दात्मकत्वात् कृष्णवर्णत्वाच्च कृष्णः । द्वीपसम्बन्धी द्वीपं अयनमाश्रयं यस्य तथा कृष्णश्चासौ द्वैपायनश्च कृष्णद्वैपायनः वेदव्यासः स एव घनो मेघः । **यत्र** मध्यवाटमठं प्रति। **वायुवर्त्मना** श्रीमध्वाचार्यरूपवायुद्वारा । **अगात्** अगमत् । 'इण् गतौ' इति

---

१ मृत्तिकावृषभपूजाकालः(ज्येष्ठ-अमावास्या)

२ शमयन् भवसन्तापं रमयन् साधुचातकान् ।
**कृष्णमेघः** कृपादृष्टिवृष्ट्या पुष्णातु मामपि ॥ – इति तात्पर्यचन्द्रिकायाम्

धातोर्लुङ् । घनो वायुद्वारा यथा आयाति तथेत्यर्थः । यत्र मध्यवाटे श्रीमध्वाचार्यः वेदव्यासमूर्ति [1]स्थापितवानित्यर्थः । अत एव [2]**भवघर्मभवार्तिघ्नः** भवः संसारस्स एव घर्मस्तापस्तस्माद्भवामुत्पन्नामार्ति क्लेशं हंतीति भवघर्मभवार्तिघ्नः **स मठः** 'मठश्छात्रादि-निलयः' इत्यमरः। **सता** सत्पुरुषेण । **सेव्यतां** 'सेवृ सेवायाम्' इति धातोः कर्मणि लोट् । वेदव्याससन्निधानपात्रत्वात् सज्जनैः सेव्योऽयं मठ इति भावः । **रूपकमलङ्कारः** ।।२७।।

### मध्यवाटस्थः श्रीवेदव्यासः

**स्नेहार्द्रमध्वहृदयाख्यदशानुषक्तं मोहाख्यसन्तमसकृन्तनतीव्रशक्तिम् ।**
**श्रीमध्यवाटमठपौरटभाजनस्थं व्यास[3]प्रदीपमिममादरतो भजध्वम्।।२८।।**

**स्नेहार्द्रेति** । [4]**स्नेहार्द्रमध्वहृदयाख्यदशानुशक्तं** स्नेहेन भक्तिरसेन तैलेनेति ध्वनिः । 'स्नेहस्तैलादिके रस' इति विश्वः । आर्द्रं मध्वहृदयं मध्वाचार्यहृदयमित्याख्या यस्याः सा तथा तादृशी दशा वर्तिः । 'दशा वर्त्यामवस्थायाम्' इति विश्वः । तथा अनुषक्तं सम्बद्धम्। अनेन आचार्याणां मठे वेदव्यासे च उभयत्र स्नेहोऽस्तीति द्योत्यते । नित्यापरोक्षित्वं[5] च वायोरस्तीत्यपि द्योत्यते । यथा दशानुषक्त एव दीपस्तिष्ठति तथा

---

१ प्राप स नारायणतः शुद्धशिलात्मप्रतिमाः।
यासु स पद्मासहितो दोष्यहितः सन्निहितः ।। – सुमध्वविजये(१०/२४)
तीर्थं स्वपार्श्वभूमिं च मोक्तुं नेच्छति सन्मतौ ।
त्वत्स्नानाम्बुनि गङ्गा स्याच्छिलास्वास्वहमित्यदात् ।। – सुमध्वविजयभावप्रकाशिकायाम्

२ तापत्रयेण सन्तप्तं यदेतदखिलं जगत् ।
वक्ष्यामि शान्तये तस्य कृष्णामृतमहार्णवम् ।। – कृष्णामृतमहार्णवे

३ 'विष्णुरध्यात्मदीपः' – इति भागवते (१०/३/२४)

४ माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः ।
स्नेहो भक्तिरिति प्रोक्तः... ।। – महाभारततात्पर्यनिर्णये (१/९५)

५ एवं प्रलयकालेऽपि प्रतिभातपरावरः । मुख्यवायुः ..... ।। – इत्यनुव्याख्याने (२/३/८)
शुद्धे भागवते धर्मे निरतो यद्वृकोदरः । – म.भा.ता.निर्णये (१८/४)

अयमपि मध्वहृदयानुषक्त एव तिष्ठतीति भावः । **मोहाख्यसन्तमसकृन्तनतीव्रशक्तिं** मोहाख्यमज्ञानाभिधं सन्तमसं अन्धकारः । 'अवतमससमन्धतमसंसन्तमसं ध्वान्तमन्धकारश्च' इति हलायुधः । तस्य कृन्तने छेदने तीव्रा शक्तिः सामर्थ्यं यस्य स तथा तम्। अनेन गुरुसन्निहित[1] एव कृष्णोऽज्ञानं निरस्यतीति सूच्यते । **श्रीमध्यवाटमठपौरटभाजनस्थं**[*] श्रीमध्यवाटमठाख्यसौवर्णपात्रस्थम् । हे जन **आदरतः** आदरेण । **भजध्वं** सेवध्वम् । 'भज सेवायाम्' इति धातोर्लोट् । **रूपकमलङ्कारः** ॥ २८ ॥

**वेदव्यास गुणावास विद्याधीश सतां वश ।**
**मां निराशं गतक्लेशं कुर्वनाशं हरेऽनिशम् ॥ २९ ॥**

अन्त्यानुप्रासाख्यशब्दालङ्कारभरिततया वेदव्यासं स्तौति – [2]**वेदव्यासेति** । **गुणावास** गुणानामावासभूत । आसमन्ताद्वसन्त्यस्मिन्नित्यावासः । **विद्याधीश** विद्यानामधीश । **सतां** सज्जनानां **वश** अधीन । हे वेदव्यास हरे । **अनिशं** नित्यं । **मां निराशं** निर्गता आशा दुर्विषयेच्छा यस्मात् स तथा तम् । वैराग्यवन्तमित्यर्थः । **अनाशं** नाशरहितम् । मुक्तमित्यर्थः । **गतक्लेशं** गताः क्लेशाः सांसारिकदुःखानि यस्य स तथा तम् । **कुर्विति** सम्बन्धः ॥ २९ ॥

### चिन्तामणिनरसिंहः

**भून्यस्तवामाङ्गवामपाणिमुत्क्षिप्तदक्षोरुगतान्यहस्तम् ।**
**चक्रायुधं वेत्रवतीतटस्थं चिन्तामणिं श्रीनरसिंहमीडे ॥ ३० ॥**

---

१ 'अप्यच्युतो गुरुद्वारा प्रसादकृदहं त्विति । – इति महाभारततात्पर्यनिर्णये (२६/५२)
'मुकुन्दभक्त्यै गुरुभक्तिजायै' – सुमध्वविजये (१/५)

२ कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् । – म.भा.ता.नि. (२/५६)
मुनीनामप्यहं व्यासः (गीता - १०/३७);
दत्तव्यासादिरूपेषु ज्ञानकार्यस्तथा प्रभुः । – ता.नि. (२/२५)

* स्वर्णं लोहमणिश्चैव पुरटं चाभिधीयते – छान्दोग्यभाष्ये (६/१)

चिन्तामणिनरसिंहं वर्णयति – **भून्यस्तेति**। **भून्यस्तवामाङ्कगवामपाणिं** भुवि भूमौ न्यस्ते निक्षिप्ते वामाङ्के सव्योरौ गतः वामपाणिः वामहस्तो यस्य स तथा तम्। **उत्क्षिप्तदक्षोरुगतान्यहस्तं** उत्क्षिप्ते उद्धृते दक्षोरौ दक्षिणाङ्के गतः अन्यहस्तः यस्य स तथा तम्। **चक्रायुधं** चक्रमेव आयुधं यस्य स तथा तम्। [१] **वेत्रवतीतटस्थं** वेत्रवत्याख्यनदीतीरे स्थितम्। **चिन्तामणिं** चिन्तामणिनामकम्। **श्रीनरसिंहं ईडे** स्तौमि। 'ईड स्तुतौ' इति धातोर्लट्॥ ३०॥

**उद्धृत्यपातालतलात् करस्थचक्रेण चक्रं खलयोगिनीनाम्।**
**निहत्य गौरीवरकामदोऽभूदुन्नम्रकर्णो नरसिंह एषः ॥ ३१ ॥**

**उद्धृत्येति**। **उन्नम्रकर्णः** उद्धृतकर्णः। **एष नरसिंहः**। **पातालतलात्** पातालप्रदेशात्। ऊर्ध्वमागत्य **उद्धृत्य करस्थचक्रेण** करगतसुदर्शनेन। **खलयोगिनीनां** खलानां दुष्टानां योगिनीनां पिशाचानाम्। **चक्रं** समूहम्। **निहत्य** संहृत्य। **गौरीवरकामदः** गौरीवरस्य उमापतेः शिवस्य कामदः अभीष्टप्रदः। **अभूत्**। चिन्तामणिनरसिंहः शिवं ग्रसितुमागतं [२] योगिनीं निहत्य शिवं ररक्षेति **पौराणिकी प्रथा**॥ ३१॥

### नेत्रावती(नदी)

**वराहनयनानन्दधारा नेत्रावतीसरित्।**
**शुष्कां तद्भक्तिलतिकां पुष्णाति कथमन्यथा ॥ ३२ ॥**

नेत्रावतीं वर्णयति। **वराहेति**। **नेत्रावती सरित्** वराहनेत्रोत्पन्ना नेत्रावती नाम नदी। **वराहनयनानन्दधारा** वराहस्य हरेर्नयनानन्दधारा आनन्दाश्रुप्रवाहरूपा भवति। न तु दुःखाश्रुधारा। तस्य आनन्दपूर्णत्वात्। **अन्यथा** आनन्दाश्रुधारा न भवेच्चेत्। **शुष्कां** विषयस्नेहलक्षणतापाभितप्ताम्। **तद्भक्तिलतिकां** तस्मिन् वराहे भक्तिरेव लतिका लता ताम्। **कथं पुष्णाति** पोषयति। 'पुष पुष्टौ' इति धातोर्लट्। नेत्रजलस्य आनन्द-

---

[१] वेत्रवती = नेत्रावती; [२] 'योगिनीग्रस्तगिरिशत्राता' – इति वासुदेवसहस्रनामस्तोत्रे।

जलान्यत्वे लताङ्कुरादिशोषकत्वमेव भवेत् न तु पोषकत्वम्। इयं शुष्कां तद्भक्तिलतिकां पुष्णातीत्यानन्दाश्रुधारैव भवेदित्यर्थः। नेत्रावतीस्नानेन विष्णुभक्तिरभिवर्धत इति भावः।

'ये पिबन्ति जलं तासां मनुजा मनुजेश्वर।
प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः ॥'

इति [१]वचनात्। **अर्थापत्तिरलङ्कारः** ॥ ३२ ॥

**कोललोलकृपाशीललोचनाम्बुजचुम्बिनि।**
**मज्जन् नेत्रावतीतोये तद्दयेक्षास्पदं न कः ॥ ३३ ॥**

**कोलेति। कोललोलकृपाशीललोचनाम्बुजचुम्बिनि** कोलस्य वराहस्य। 'वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः' इत्यमरः। लोलं चञ्चलं कृपाशीलं लोचनमेवाम्बुजं तच्चुम्बति स्पृशतीति तथोक्तं तस्मिन्। **नेत्रावतीतोये मज्जन् कः** पुमान्। **तद्दयेक्षास्पदं** न तस्य वराहस्य दयेक्षायाः कृपावलोकनस्य आस्पदं विषयः **न** भवेत्। भवेदेवेत्यर्थः। तन्नेत्रस्थजले मज्जतः तदवलोकनविषयत्वस्य अवश्यं भावादिति भावः। नेत्रावतीस्नानेनहरिकृपाविषयो भवतीति तात्पर्यार्थः। **वृत्त्यनुप्रासाख्यः** शब्दालङ्कारः ॥ ३३ ॥

कुमारधारानेत्रावतीसङ्गमः

**कुमारधारासरिता समेता नेत्रावती भाति तरङ्गिणीयम्।**
**त्रिमार्गगातीरगतोऽप्यवात्सीत् त्रिलोचनो यत्र सहस्रमूर्तिः ॥ ३४ ॥**

---

[१] ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी।
कावेरी च महापुण्या प्रतीची च महानदी ॥
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर।
प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः ॥ – भागवते(११/५/४१,४२)

महानदी - नेत्रावती। – सुमध्वविजयभावप्रकाशिकायाम् (४/१९)

प्रतीची महानदी - नाम्ना नेत्रावती - वराहक्षेत्रात् सह्यगिरिं भित्वा पश्चिमसमुद्रं स्यन्दमाना ॥
– श्रीविजयध्वजतीर्थाः (भागवतटीकायाम्)

कुमारधारानेत्रावतीसङ्गमं वर्णयति – **कुमारधारेति** । **कुमारधारासरिता** कुमारधाराख्यनद्या । **समेता** संयुक्ता । **इयं नेत्रावती** नाम । **तरङ्गिणी** नदी । **भाति** शोभते । **यत्र** कुमारधारानेत्रावतीसङ्गमे । **त्रिलोचनः** त्रीणि लोचनानि यस्य सः त्रिलोचनः शिवः । **त्रिमार्गगातीरगतोऽपि** त्रिमार्गगायाः भागीरथ्याः । 'भागीरथी त्रिपथगा' इत्यमरः । तीरं गतोऽपि । **सहस्रमूर्तिः** सहस्रं मूर्तयो यस्य स तथा । **अवात्सीत्** अवसत् । 'वस निवास' इति धातोर्लुङ् । गङ्गातीरगतस्यापि शिवस्य सहस्रधा वस्तुमभिरुचिमुत्पादयतोऽस्य कुमारधारानेत्रावतीसङ्गमस्य महिमातिशयः कथं कथनीय इति भावः।। ३४ ।।

### कुमारधारा (नदी)

**कुमारधारे सुजनोद्धारे विज्ञानधारया ।**
**पुनीहि मामघस्तोमं लुनीहि सदनीहितम्　　　　।। ३५ ।।**

**कुमारधार** इति । **सुजनोद्धारे** सुजनानां सज्जनानां उद्धारः संसारादुद्धरणं यस्याः इति पञ्चम्यर्थे बहुव्रीहिः । तस्याः सम्बुद्धिः । हे **कुमारधारे** । **विज्ञानधारया** परमात्मविषयकज्ञानपरम्परया । **मां पुनीहि** पवित्रं कुरु । 'पूङ् पवने' इति धातोर्लोट् । **सदनीहितं** सतामनिष्टभूतं [1] सत्कर्मविरोधि वा । **अघस्तोमं** पापसमूहं । [2] **लुनीहि** छिन्दि । 'लूञ् छेदने'ति धातोर्लोट् ।। ३५ ।।

**कुमारधारे त्वत्तीरे मुक्तिद्वारे गुणाकरे ।**
**तपस्तपन्तः सन्मन्त्रं जपन्तः स्याम सन्ततम्　　　।। ३६ ।।**

**कुमारधारा** इति । हे **कुमारधारे** । **गुणाकरे** पावित्र्यादिगुणाश्रये **मुक्तिद्वारे** मोक्षोपाये । **त्वत्तीरे** । वयं **सन्ततमं** अनवरतम् । **तपः** [3] कृच्छ्रादितपः । **तपन्तः** चरन्तः ।

---

[1] प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ।।　　　　　　– इति गीतायाम् (१७/२६)

[2] न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ।।　　　　　　– भागवते (१०/८४/११)

**सन्मन्त्रं** [४]उत्तमप्रणवहयग्रीवादिमन्त्रम् । **जपन्तः** । 'जप अव्यक्तदेशे' इति धातोर्लटः शत्रादेशः । **स्याम** भवेम । 'अस भुवि' इति धातोर्लिङ् ।। ३६ ।।

सुब्रह्मण्यः(क्षेत्रम्)

**सुब्रह्मण्यस्य महिमा वर्णितुं केन शक्यते ।**
**यत्रोच्छिष्टमपि स्पष्टं श्वित्रिणः शोधयत्यहो ।। ३७ ।।**

सुब्रह्मण्यं वर्णयति – **सुब्रह्मण्यस्येति** । **सुब्रह्मण्यस्य** सुतरां ब्राह्मणेषु साधुरिति सुब्रह्मण्यः । 'तत्र साधुः' [५]इति यत्प्रत्ययः । तस्य षण्मुखस्य । **महिमा** माहात्म्यम् । **वर्णितुं** स्तोतुम् । **केन शक्यते** केन वा शक्यते स्तोतुं ? न कोऽपि शक्नोतीत्यर्थः । 'शक्लृ शक्तौ' इति धातोः कर्मणि लट् । **यत्र** सुब्रह्मण्यक्षेत्रे । **उच्छिष्टमपि** । **श्वित्रिणः** कुष्ठव्याधियुक्तान् । स्पष्टं यथा भवति तथा । **शोधयति** शुद्धान् करोति । **अहो** आश्चर्यम् । 'शुध शौचे' इति धातोर्ण्यन्ताल्लट् । सुब्रह्मण्यक्षेत्रे ब्राह्मणोच्छिष्टलेपेन कुष्ठव्याधिर्नश्यतीति प्रसिद्धः । उच्छिष्टस्याप्येतादृशसामर्थ्यम् । किमु देवस्येति भावः ।। ३७ ।।

**ब्रह्महत्यादोषशेषं ब्राह्मणानामयं हरन् ।**
**विरोधे तु परं कार्यमिति न्यायममानयत् ।। ३८ ।।**

**ब्रह्महत्येति** । **अयं** सुब्रह्मण्यक्षेत्राधिपतिः स्कन्दः । **ब्राह्मणानां** । **ब्रह्महत्यादोषशेषं** ब्रह्महत्यायाः ब्राह्मणवधाज्जातो यो दोषस्तस्य शेषं नरकभोगावशिष्टं कुष्ठव्याधिरूपम् । जन्मान्तरकृतब्रह्महत्यादोषशेषेण कुष्ठव्याधियुक्ता भवन्तीति स्मार्तप्रसिद्धिः । **हरन्** परिहरन् । **विरोधे तु** विप्रतिषेधे तु । **परं कार्यं** परसूत्रेण कार्यम् । इति

---

३ तपस्विभ्यः – कृच्छ्रादिचारिभ्यः । इति गीताभाष्योक्तेः (६/४६)

४ सच्छब्द उत्तमं ब्रूयात् । – (स्मृतिः)

५ पा.सू. (४/४/९८)

न्यायं [१]'विप्रतिषेधे परं कार्यम्' पूर्वपरसूत्रयोर्विरोधे परसूत्रमेवाङ्गीकर्तव्यमिति वैयाकरणनीतिम्। **अमानयत्** अङ्गीकृतवान्। 'मान पूजायाम्' इति धातोर्लङ्। अयं भावः। पूर्वकृतब्राह्मणवधजनितकुष्ठव्याधिपरिहारे एतद्धतस्य ब्राह्मणस्य विरोधः। अपरिहारे शरणागतस्येदानींतनस्य ब्राह्मणस्य विरोधः। एवं विरोधे प्राप्ते। 'विप्रतिषेधे परं कार्यम्' इति अङ्गीकृत्येदानींतनशरणागत एव ब्राह्मणः पालनीय इति निश्चित्य कुष्ठव्याधिं परिहृत्य शरणागतं पालयतीति। **युक्तिरलङ्कारः**। 'दुर्घटार्थस्य घटना चातुरी युक्तिरिष्यते' इत्युक्तत्वात्॥ ३८॥

**सुब्रह्मण्य सुराग्रगण्य कुजनारण्यज्वलत्पावक**
**प्रब्रूयात् तव विक्रमं भुवि कविः को वाऽमरो वा दिवि।**
**यः प्रागप्रतिमल्लतारकमहादैत्यं सुदृप्तं भवान्**
**विप्रौघप्रिय सुप्रभाव समरे क्रीडन्नजैषीद् द्विषम् ॥ ३९ ॥**

**सुब्रह्मण्येति**। **सुराग्रगण्य** सुरश्रेष्ठ। **कुजनारण्यज्वलत्पावक** कुजना दुर्जना एव अरण्यं विपिनम् तस्य ज्वलत्पावक प्रदीप्तानल। दुर्जनसंहर्त इत्यर्थः। हे **सुब्रह्मण्य** स्कन्द। **तव विक्रमं** पराक्रमम्। **भुवि को वा कविः** नरः। **दिवि** स्वर्गे **को वा अमरः** देवः। **प्रब्रूयात्** वदेत्। 'ब्रूञ् व्यक्तायां वाचि' इति धातोर्लिङ्। न कोऽपि वक्तुं समर्थ इत्यर्थः। तत्र चैकं पराक्रमं वर्णयति। हे **सुप्रभाव** हे **विप्रौघप्रिय** हे सुब्रह्मण्य। यो **भवान् प्राक्** पूर्वम्। **समरे** देवासुरयुद्धे। **सुदृप्तं** अत्युद्धतम्। **द्विषं** शत्रुम्। **अप्रतिमल्लतारकमहादैत्यं** न विद्यते प्रतिमल्लः प्रतिभटो यस्य स तथोक्तः। स चासौ तारकमहादैत्यश्च तम्। तारकाख्यं महादैत्यम्। **क्रीडन्** अनायासेनेत्यर्थः। [२]**अजैषीत्** अजयत्। जयतेर्लुङ्॥ ३९॥

---

१. विप्रतिषेधे परं कार्यम्। पा.सू. (१/४/२)

२ भवद्योगे न मध्यमः।(पा.सू. २/८/६), शेषे प्रथमः (पा.सू. १/४/१०८)

**अन्नं ददासि विदधास्यखिलस्य रक्षां**
**क्लिन्नं पुनासि विलुनासि समस्तदोषान् ।**
**हे स्कंद वन्य भवतो भुवने भवानी-**
**सूनो कृपाजलनिधे कतमः समः स्यात्** ॥ ४० ॥

**अन्नमिति । भवानीसूनो** भवान्याः पार्वत्याः सूनो पुत्र । **वन्य** स्तुत्य । **हे स्कन्द** त्वम् । **अन्नं ददासि** अन्नदोऽसि । **अखिलस्य** समस्तस्य ब्राह्मण्यस्य । **रक्षां विदधासि** अन्नदानेन अखिलान् पालयसीत्यर्थः । **क्लिन्नं** कुष्ठव्याधिनार्द्रम् । **पुनासि** कुष्ठव्याधिं परिहृत्य पवित्रं करोषि । **समस्तदोषान्** ब्रह्महत्यादीन् । **विलुनासि** छिनत्सि । विष्णु[1]चक्रात्मकत्वादिति भावः । 'लूञ् छेदने' इति धातोर्लट् । इति यतः अतः कारणात् **कृपाजलनिधे** करुणासमुद्र । **हे स्कन्द । भुवने** लोके । **भवतः** तव । **कतमः** को वा । **समः** सदृशः । **स्यात्** । अन्नदानादिषु त्वत्सदृशः कोऽपि नास्तीत्यर्थः । 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' [2]इति तृतीयानिषेधाच्छेषे षष्ठी ॥ ४० ॥

**प्रवर्तितस्कान्दमतः पृथिव्यां जगत्पतिं श्रीपतिमात्मनाथम् ।**
**रहस्युपाराधयितुं गुहाद्य गुहां श्रितोऽसीति मम प्रतर्कः** ॥४१॥

**प्रवर्तितेति । हे गुह** स्कन्द । **पृथिव्यां** भूम्याम् । **प्रवर्तितस्कान्दमतः** । प्रवर्तितं स्कान्दमतं स्कन्द एव सर्वोत्तम इति मतं येन स तथा । **त्वम्** अद्य अधुना । **जगत्पतिं आत्मनाथं** आत्मनः स्वस्य नाथम् । **श्रीपतिं** लक्ष्मीपतिम् । **रहसि** एकान्ते **उपाराधयितुम् । गुहाश्रितः** गुहां वल्मीकगुहां आश्रितः **असि** । अनेन पूर्वं स्कन्दमतं कृत्वा तत्राहमेव सर्वोत्तम इति सिद्धान्तयित्वा इदानीं स्वेन अन्यः पूज्यते चेदस्मत्प्रतारणायैव [3]इदं शास्त्रं कृतमिति बुद्ध्या जनानां स्वशास्त्रे प्रवृत्तिर्न स्यादिति धियैव रहसि

---

१ ...................... कामः पुनः श्रीरमणाद्रमायाम् ।
प्रद्युम्ननामाऽभवदेवमीशात् स स्कन्दतामाप स चक्रतां च ॥ – इति म.भा.ता.निर्णये (३/७२)

२ पा.सू. (२/३/७२)

उपाराधयितुं गुहां समाश्रितोऽसि **इति मम प्रतर्कः** ऊहः । सुब्रह्मण्यक्षेत्रे वल्मीकगुहायां स्कन्दस्तिष्ठतीति प्रसिद्धिमनुसृत्येय**मुत्प्रेक्षा** ।। ४१ ।।

**श्रीविष्णुतीर्थमुनिमित्र सुरारिजैत्र श्रीकृष्णपज्जलजभृंग कृताघभङ्ग ।**
**सह्येश देहि सकलैरुपजीव्यमन्नं संहर्तृ सर्वभुवनस्य कुमार मह्यम्।।४२।।**

**श्रीविष्णुतीर्थेति** । [४]**श्रीविष्णुतीर्थमुनिमित्र** श्रीविष्णुतीर्थमुनिसख । विष्णुतीर्थश्रीचरणः सुब्रह्मण्ये मठं कृत्वा अतिष्ठदिति प्रसिद्धः । एकत्रावासेन परस्परमैत्री भवतीति गुहस्य विष्णुतीर्थमुनिमित्रत्वम् । **सुरारिजैत्र** सुररिस्तारकासुरः तं जयतीति सुरारिजैत्रः, तस्य सम्बुद्धिः । **श्रीकृष्णपज्जलजभृङ्ग** श्रीकृष्णपज्जलजे श्रीकृष्णपादारविन्दे भृङ्गः भ्रमरः, तस्य सम्बुद्धिः । **कृताघभङ्ग** कृतः अघानां पापानां भङ्गः येन स तथोक्तस्तस्य सम्बुद्धिः । **सह्येश** सह्यपर्वतस्येश स्वामिन् । हे **कुमार** स्कन्द । **सकलैः** ब्रह्मादिभिः **उपजीव्यं** आश्रयणीयं **सर्वभुवनस्य** समस्तलोकस्य । **संहर्तृ** संहारक । **अन्नं** अद्यतेऽनेनेति निमित्तेन [५]अन्नशब्दवाच्यं श्रीनारायणम् । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' [६]इति श्रुतेः अद्यते उपजीव्यते, अत्ति च संहरति च । यतस्तस्मात् । नारायणाख्यं ब्रह्म अन्नमित्युच्यते इति श्रुत्यर्थः । **मह्यं देहि** दिश । त्वमन्नदोऽसीति प्रसिद्धः । गुह्यमप्यन्नमेव दिशेति औचित्योक्तिः । श्रीनारायणं ममापरोक्षं कुर्विति तात्पर्यार्थः ।। ४२ ।।

---

[३] स्कन्दसूर्यगणेशादिमतानि न्यायतोऽमुतः ।
निराकृतान्यशेषेण सिद्धान्तस्याविशेषतः ।। – इत्यनुव्याख्याने (२/२/४१)

[४] तिरोहिते सन्मतेऽस्मिन् विष्णुतीर्थो गुहाचलात् ।
आगत्योद्धृत्य तत्रत्य ग्रन्थान् स प्रथयिष्यति ।। – सम्प्रदायपद्धतिः (२१)

स्वानुजं विष्णुतीर्थं च तपसा धूतकल्मषम् ।
प्रेषयिष्यति सत्तत्वकथनाय कलौ किल ।। – सरसभारतीविलासः(७/६२)

[५] 'अन्नमन्नाद एव च' – इति विष्णुसहस्रनामसु ।

[६] तैत्तिरीयोपनिषत् (२/५)

### श्रीवेदव्याससम्पुटम्

**यत्र सम्पुटमस्फोटं कृष्णस्य स्फोरयत्यहो ।**
**अग्राह्यत्वमदृश्यत्वं किं पुनस्तत्र पण्डिताः ॥ ४३ ॥**

**यत्रेति** । **यत्र** यस्मिन् सुब्रह्मण्ये । **अस्फोटं** अविश्लिष्टम् । **सम्पुटं** शालग्रामस्थापनकरण्डम् । कर्तृ । **कृष्णस्य** हरेः । **अग्राह्यत्वं** ग्रहीतुमशक्यत्वम्। **अदृश्यत्वं** दर्शनाविषयत्वम्[१] । **स्फोरयति** प्रकाशयति । 'स्फुर प्रकाशे' इति धातोर्लट् । सम्पुटस्य संश्लिष्टत्वादन्तःस्थितश्रीकृष्णमूर्तेरग्राह्यत्वं अदृश्यत्वं च व्यनक्तीति भावः । **अहो** जडस्य विष्णुगुणप्रतिपादकत्वमाश्चर्यम् । **तत्र** सुब्रह्मण्ये । **पण्डिताः** विद्वांसः । **किं पुनः** हरेरदृश्यत्वादिगुणान् प्रतिपादयन्तीति किं वक्तव्यम् ॥ ४३ ॥

**अभेद्यमतियत्नेनाप्यस्खलत्कृष्णविग्रहम् ।**
**तत्पूजाभाजनं भाति माध्वं हृदिव सम्पुटम् ॥ ४४ ॥**

**अभेद्यमिति** । **अतियत्नेनाप्यभेद्यं** भेत्तुमशक्यम् । मध्वाचार्यहृदयमपि । 'य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे' [२]इति श्रुत्यनुसारेण मुख्यप्राणः असुराणां भेत्तुमशक्यस्तत्र [३]कदाऽप्यसुरावेशाभावादिति भावः । **अस्खलत्कृष्णविग्रहं** अस्खलन्न चलन् कृष्णस्य विग्रहो मूर्तिर्यस्मात्तथोक्तम् । आचार्यहृदयमपि सदा सन्निहितकृष्णमूर्ति । **तत्पूजाभाजनं** तस्य कृष्णस्य पूजापात्रम् । **सम्पुटं** देवस्यास्फोटसम्पुटान्तःपातित्वात् ।

---

१ यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं .... । – इति आथर्वणोपनिषदि (१/६)

'ओं अदृश्यत्वादिगुणको धर्मोक्तेः ओं' – ब्रह्मसूत्र (१/२/२१)

२ छान्दोग्योपनिषत् (१/२/७)

३ प्राणस्य नासुरावेशः आखणाश्मसमो हि सः ॥
– भागवततात्पर्यनिर्णयोदाहृतब्रह्मतर्कवचनम् (११/२/४९)

सम्पुटोपर्येव गन्धपुष्पादिकमर्चयन्तीति भावः । **माध्वं** मध्वाचार्यसम्बन्धि । **हृदिव** चित्तमिव । **भाति** अत्र विशेषस्यासंश्लिष्टत्वात् **तुल्ययोगित्वमलङ्कारः** ॥ ४४ ॥

**पयस्विनी (नदी)**

**पयस्विनि जगत्स्वामी त्वयि सन्निहितो ध्रुवम् ।**
**न चेत् तत्प्रेयसी तीरे कथं तेऽवतरिष्यति ॥ ४५ ॥**

पयस्विनीं वर्णयति – **पयस्विनीति** । **हे पयस्विनी** पयस्विन्याख्यतरङ्गिणि । **जगत्स्वामी** श्रीनारायणः । **त्वयि सन्निहितः ध्रुवं** निश्चयः । **न चेत्** त्वयि सन्निहितो न भवति चेत् । **तत्प्रेयसी** तस्य नारायणस्य प्रेयसी प्रियतमा महालक्ष्मीः । **ते** तव । **तीरे कथमवतरिष्यति** दुर्गारूपेण अवतारं करिष्यति । दुर्गारूपेण महालक्ष्मीः पयस्विनी-तीरेऽवतरिष्यतीति [१]पुराणप्रसिद्धिः । स्वभर्त्रवस्थितिमवलोक्य महालक्ष्म्या त्वत्तीरेऽ-वतरिष्यमाणत्वात् त्वयि विष्णुः सन्निहित इति निश्चय इति भावः ॥ ४५ ॥

**सुवर्णा (नदी)**

**वेदाचलहृदुद्भूतां सुवर्णां को नु वर्णयेत् ।**
**अंहसो दह्यमानस्य श्रावयन्तीं स्वनं जनान् ॥ ४६ ॥**

सुवर्णां वर्णयति – **वेदेति** । **वेदाचलहृदुद्भूतां** वेदाचलस्य वेदपर्वतस्य हृदः हृदयगुहायाः उद्भूतामुत्पन्नाम् । **दह्यमानस्य** भस्मीभावं गच्छतः । **अंहसः** दुष्कृतस्य । 'अंहो दुरितदुष्कृतम्' इत्यमरः । **स्वनं** चटचटध्वनिम् । **जनान्** स्वाप्सु मज्जनान् जनान्। **श्रावयन्तीं सुवर्णां** नदीम् । **को नु वर्णयेत्** कः पुमाननुवर्णयेत् स्तुतिं कुर्यात् । 'वर्ण स्तुतौ' इति धातोर्लिङ् । स्नानमात्रेण दुरितध्वंसमनुभावयन्तीं सुवर्णां नदीं न कोऽपि स्तोतुं समर्थ इत्यर्थः ॥ ४६ ॥

---

१ दुर्गा पुनर्विप्रकुलेऽवतीर्णा हनिष्यति व्रातमथासुराणाम् । –महाभारततात्पर्यनिर्णये (३२/१६४)

स्वहेलया पातितपार्थिवव्रजां धीशुद्धिदां केरळभूषणायिताम् ।
पयस्विनीं प्रेक्ष्य पथि द्विजार्चितां स भाविनीमस्मरदत्र चण्डिकाम् ॥ –इति मध्वविजये(५/३५)

### कुम्भासिक्षेत्रम् (१)

**भासि कुम्भासिसंज्ञ त्वं क्षेत्रं श्रीशगिरीशयोः ।**
**यत्र कुम्भासुरस्यासिरभासीद् द्रौपदीपतिः ॥ ४७ ॥**

कुम्भासिं वर्णयति – **श्रीशगिरीशयोः** । **कुम्भासिसंज्ञ** कुम्भासीति संज्ञा यस्य स तस्य सम्बुद्धिः । **श्रीशगिरीशयोः क्षेत्रं त्वं भासि** शोभते । 'भा दीप्तौ' इति धातोर्लट्। कुम्भासिक्षेत्रं शैववैष्णवात्मकमिति **पुराणप्रसिद्धम्** । **यत्र** कुम्भासिक्षेत्रे । **द्रौपदीपतिः** भीमः । **कुम्भासुरस्य** कुम्भासुराख्यासुरस्य । **असिः** खड्ग इव । **अभासीत्** । यथा खड्गः मारको भवेत् तथा भीमोऽपि कुम्भासुरमारकोऽभवदित्यर्थः । 'भा दीप्तौ' इति धातोः कर्तरि लुङ् । कुम्भासिक्षेत्रे भीमसेनः कुम्भासुरं जघानेति **पुराणप्रसिद्धिः** ॥४७॥

### कुम्भासिक्षेत्रम् (२)

**गुहामुखं तीर्थनेत्रं वेदस्थानं वनायनम् ।**
**यत्यर्थ्यं गौतमक्षेत्रं चित्रं तत्तनुवद् बभौ ॥ ४८ ॥**

पुनरपि कुम्भासिं वर्णयति – **गुहामुखमिति** । **गुहामुखं** गुहैव मुखं यस्य गुहामुखम् । तस्मिन् क्षेत्रे **यमगुहाभिधा** काचन **गुहा वर्तते** । तस्मादेवमुक्तम् । **तीर्थनेत्रं** शूद्राणां ब्राह्मणानां च द्विधाकृतं तीर्थमेव नेत्रं यस्य तत् तीर्थनेत्रम् । **वेदस्थानं** बहुशो वेदाध्ययनं तत्र कुर्वतीति भावः । **वनायनं** वनस्यायनं वनायनम् । तत्र मधुवनाख्यं वनमस्तीति भावः । वनमेव अयनमिति मुनिशरीरे योजना । **यत्यर्थ्यं** यतिभिरर्थ्यम् । माघस्नानार्थं यतयोऽपि तत्र यान्तीति भावः । **गौतमक्षेत्रं** गौतमाख्यऋषेः क्षेत्रमित्यर्थः । अनावृष्टौ सत्यां गौतममुनिना स्वशक्त्या गङ्गामाहूय मुनीन् स्थापयित्वा तत्र स्थितमिति **पौराणिकी कथा** । **तत्तनुवत्** तस्य ऋषेः शरीरवत् । **बभौ** शुशुभे । मुनिशरीरमपि सुमुखं सुनेत्रं वेदपारायणपरं वनप्रियं यतिभिरर्थ्यं च भवति तस्मात् तत्तनुवदित्युक्तम् । **चित्रं** आश्चर्यम् । जडस्य क्षेत्रस्य मुनिसाम्यं चित्रमिति भावः ॥ ४८ ॥

### कोटीश्वरस्थानम्

**चारु कोटीश्वरस्थानं शोभते यत् पुरत्रयम् ।**
**पुरारिरिव निर्जित्य ध्वजेनाद्यापि जृम्भते ॥ ४९ ॥**

कोटीश्वरस्थानं वर्णयति – **चार्विति** । **चारु** मनोहरम् । **कोटीश्वरस्थानं** कोटीश्वराख्यशिवस्थानम् । **शोभते** 'शुभ दीप्तौ' इति धातोर्लट् । **यत्** कोटीश्वरस्थानम् । **पुरारिरिव** त्रिपुरारिः शिव इव । **पुरत्रयं** स्कन्दपुरगजपुरब्रह्मपुराख्यं स्वनिकटस्थितग्रामत्रयम् । **निर्जित्य** ग्रामत्रयात् करं गृहीत्वा । **अद्यापि** अधुनाऽपि । **ध्वजेन** ध्वजोत्सवेन । **जृम्भते** शोभते । 'जृम्भि शोभायाम्' इति धातुः । **उत्प्रेक्षालङ्कारः** ॥ ४९ ॥

**नमस्ते शितिकण्ठाय कोटिसङ्ख्यर्षितोषणात् ।**
**यः कोटीश्वरसञ्ज्ञोऽभूः स किं नैकर्षिकामधुक् ॥ ५० ॥**

इदानीं कोटीश्वरनामार्थं सूचयंस्तस्माद्देवात् स्वाभीष्टसिद्धिं कैमुत्येन साधयति – **नमस्त** इति । **शितिकण्ठाय** नीलकण्ठाय । **ते नमः** तुभ्यं नमः । **यः** त्वम् । **कोटिसङ्ख्यर्षितोषणात्** कोटिसङ्ख्याकानामृषीणां तोषणात् **कोटीश्वरसंज्ञः** कोटीश्वर इति संज्ञा यस्य स तथोक्तः । **अभूः** कोटिसङ्ख्यैर्मुनिभिः तपसि क्रियमाणे सति तेषामनुग्रहाय तत्र शिवः प्रादुर्बभूवेति **पुराणप्रसिद्धोऽ**यमर्थः । **सः** त्वम् । **नैकर्षिकामधुक्** एकस्य ऋषेर्मम कामधुक् कामधेनुर्न किमिति सम्बन्धः । कोटिसङ्ख्याकमुनिकामदायकस्य एकमुनेर्मम कामितार्थप्रदत्वं कैमुत्यसिद्धमिति भावः । **स्वाप्नमिदं पद्यम्** ॥ ५० ॥

### क्रोडमुन्याश्रमः

**क्रोडयोगीश्वरक्षेत्रं भाति [१] शुक्तिमतीतटे ।**
**सतां मता द्विता यत्र स्पष्टोमेशरमेशयोः ॥ ५१ ॥**

---

१ शुक्तिमती - 'वाराही' इति नाम्ना प्रसिद्धा ।

क्रोडमुन्याश्रमं वर्णयति – **क्रोडेति** । **क्रोडयोगीश्वरक्षेत्रं** क्रोडयोगीश्वरस्य क्रोडमुनीश्वरस्य क्षेत्रम् । **शुक्तिमतीतटे** शुक्तिमत्याख्यनदीतीरे । **भाति** शोभते। **यत्र** क्रोडयोगीश्वरक्षेत्रे । **सतां** सज्जनानाम् । **मता** अभिमता । **उमेशरमेशयोः** शङ्करनारायणयोः । **द्विता** द्वैतं भेद इत्यर्थः । **स्पष्टा** स्फुटा । भिन्नभिन्नस्थानगतयोः शङ्करनारायणयोरवयवरूपो भेदः सर्वैरनुभूयत इत्यर्थः । क्रोडयोगीश्वरक्षेत्रे शङ्करनारायणयोर्लिङ्गे तिष्ठतः । तत्र नारायणलिङ्गं स्थूलं शङ्करलिङ्गं तु कृशम् ।। ५१ ।।

**शङ्करनारायणयोर्भेदः**

**द्वासुपर्णेति वेदार्थभूतौ तौ प्रायशोऽमरौ ।**
**यदेकोऽश्नाति बहुशोऽनश्नन्नन्यो विवर्धते ।। ५२ ।।**

तत्र अर्चकाश्शैवाः शङ्कराय पूजोपहारादिकं बहु प्रयच्छन्ति नारायणाय न प्रयच्छन्ति । एवं स्थिते शैवानां कुत्सितव्यापारेणैव शङ्करनारायणयोर्भेदं साधितुमाह – **द्वासुपर्णेति** । **तौ** तस्मिन् क्षेत्रे स्थितौ । **अमरौ** शङ्करनारायणाख्यौ देवौ । **प्रायशः** निश्चयेन । **द्वासुपर्णेति वेदार्थभूतौ** ।

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति'

इति[१] श्रुत्यर्थभूतौ जीवपरमात्मानौ भवेताम् । तयोर्मध्ये **एकः** शङ्करः जीवकोटि-प्रविष्टो भवेत् । **यत्** यस्मात् कारणात् । **बहुशः** अर्चकैर्दत्तमन्नादिकम् । **अश्नाति** अत्ति । 'अश भक्षण' इति धातोर्लट् । **अन्यः** शङ्कराद्भिन्नो नारायणः परमात्मा भवेत् । यद्यस्मात् कारणात् । **अनश्नन्** अभुञ्जानः सन् **अभिवर्धते** । अतो द्वासुपर्णेति वेदार्थभूताविति श्लोकार्थः ।। ५२ ।।

**श्रुतिशतवर्णितचरितं यतिहृन्निरतं यथेष्टगुणभरितम् ।**
**किङ्करवरदमनिन्द्यं शङ्करनारायणं वन्दे ।। ५३ ।।**

---

१ इति आथर्वणोपनिषदि (५/१)

पुनरपि शङ्करनारायणयोर्मूर्तिं वर्णयति – **श्रुतीति** । **श्रुतिशतवर्णितचरितं** श्रुतीनां शतेन वर्णितानि चरितानि यस्य सः, तथा तम् । **यतिहृन्निरतं** यतीनां हृदि चित्ते । निरतं नितरां रतिमन्तम् । **यथेष्टगुणभरितं** यथेष्टमिष्टमनतिक्रम्य । गुणाः ज्ञानानन्दादिगुणाः । तैर्भरितं पूर्णम् । अनेनानिष्टभूतदुःखादिगुणानां निरासः । **किङ्करवरदं** किङ्कराणां वरदं वरदायकम् । **अनिन्द्यं** निन्द्यो न भवतीति अनिन्द्यः तम् । **शङ्करनारायणं** शङ्करश्च नारायणश्च शङ्करनारायणाविति द्वन्द्वसमासं कृत्वा अस्य चैकवद्भावः कर्तव्यः । युवोरनाकावित्यत्र[1] युवोरित्येकवद्भावेऽपि पुल्लिङ्गदर्शनान्नपुंसकविधानमनित्यम् । एकस्मिन्नुच्यमाने यथैकवचनं तथा द्वयोरुच्यमानयोः सतोरप्येकवचनमेव वक्तव्यमित्येकवद्भावः भावः । एकवचनान्तशब्दवाच्यत्वरूपा एकस्य वस्तुनः उपमेत्यर्थः । न तु स्वरूपैक्यम् । शङ्खपटहमित्यत्रापि तद्दर्शनात् तथा सत्येकभाव इति स्यात् । तद्धि एकवस्तुरूपायामेव घटते न तु तदैक्ये । उपमार्थकवतेर्वैय्यर्थ्यप्रसङ्गात् । शङ्करेण सहितो नारायण इति मध्यमपदलोपी तत्पुरुषो वा । भिन्नोपाधिविशिष्टतया भिन्नयोः शङ्करनारायणयोर्घटपटयोरिव सामानाधिकरण्यायोगात् । शङ्करश्चासौ नारायणश्चेति कर्मधारयोऽप्ययुक्त एव । स हि 'विशेषणं विशेष्येण बहुलम्'[2] इति सूत्रात् विशेषणविशेष्ययोर्विशेष्येणयोर्वा दृष्टः । भिन्नयोः परस्परनिरपेक्षयोः विशेष्ययोः कथं स्यात् । तस्मादुक्त एव समासः । अयमेव न्यायो हरिहरेऽपि । **वन्दे** नमस्करोमि । 'वदि अभिवादनस्तुत्योः' लट् ॥ ५३ ॥

**शूलसुदर्शनसुरुचं बालेन्दूज्ज्वलकिरीटशोभितशिरसम् ।**
**[3]पङ्कजमुखकरचरणं शङ्करनारायणं वन्दे ॥ ५४ ॥**

---

१　पा.सू. (७/१/१३)

२　पा.सू. (२/१/५७)

३　या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ।　　– महाभारतम्

कराविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥　　– स्मृतिः

शूलेति । **शूलसुदर्शनसुरुचं** शूलं च सुदर्शनं च शूलसुदर्शने ताभ्यां शोभमाना रुक् यस्य स तथा तम् । गमकत्वाद्व्यधिकरणेऽपि बहुव्रीहिः । **बालेन्दूज्ज्वलकिरीट-शोभितशिरसं** बालश्चासाविन्दुश्च बालेन्दुः । उज्ज्वलं च तत्किरीटं च उज्ज्वलकिरीटं ताभ्यां शोभितं शिरः यस्य स तम् । [1]**पङ्कजमुखकरचरणं** पङ्कजवत् मुखं करचरणौ च यस्य स तम् । शिवस्य शूलं बालेन्दुश्च । अन्यत् समानम् । शेषं पूर्ववत् ॥ ५४ ॥

**पीनोरुकटिसुनाभं ध्यानार्होरःस्थिताहिफणहारम् ।**
**शङ्खाभ्रवर्णमनघं शङ्करनारायणं वन्दे ॥ ५५ ॥**

पीनेति । **पीनोरुकटिसुनाभं** पीनाः ऊरुकटिशोभननाभयः यस्य स तम् । **ध्यानार्होरःस्थिताहिफणहारं** ध्यानार्हे उरसि स्थितः अहिफणः हारश्च यस्य स तम् । **शङ्खाभ्रवर्णं** शङ्खश्च अभ्रं मेघश्च शङ्खाभ्रे तयोर्वर्ण इव वर्णो यस्य स तम् । **अनघं** निर्दोषम्। शेषं पूर्ववत् ॥ ५५ ॥

### कुटजाचल मूकाम्बिका (कोल्लूरुक्षेत्रम्)

**मूकाम्बिका कृपालोकादाकाङ्क्षितफलप्रदा ।**
**मूकानकृत मे शत्रूनेकान्तिकजनप्रिया ॥ ५६ ॥**

[2]कुटजाचलदेवतां मूकाम्बिकां स्तौति – **मूकाम्बिकेति** । **कृपालोकात्** कृपावलोकनात् । **आकाङ्क्षितफलप्रदा** आकाङ्क्षितानि फलानि प्रददातीति तथोक्ता । **एकान्तिकजनप्रिया** एकः नारायणः अन्ते अवसाने येषां ते । एकस्मिन् नारायणे अन्तः अध्यवसायः निश्चय इति यावत्, येषामिति वा । एकान्तिनः विष्ण्वैकनिष्ठाः । स्वार्थे 'क'प्रत्ययः । एकान्तिकास्त एव जनास्ते प्रिया यस्याः सा तथोक्ता । **मूकाम्बिका मे**

---

[1] **करारविन्देन पदारविन्दं मुखारविन्दे** विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥ – इति पुराणवचनम्

[2] एकदा तु काङ्कटकर्णाटकात् दक्षिणकर्णाटकान् देशान् यदृच्छयोपगतः कुटचाचलोपवने आस्यकृताश्मकवल उन्माद इव मुक्तमूर्धजोऽसंवीत एव विचचार ॥ .... – भागवते (५/६/८,९)

शत्रून् । **मूकानकृत** स्वभक्तशत्रून् मूकयतीति व्युत्पत्त्या सर्वज्ञाम्बिकायाः मूकाम्बिकात्वमिति तत्कृपयैव ममानुभवसिद्धमिति ज्ञापयितुमेवमुक्तम् । एतत्प्रबन्धकर्तुः वादिराजमुनेः महात्म्यमसहमानास्तौलवदेशस्थाः दुर्जनाः भिक्ष्वादिविप्राः कञ्चन बालकं मूकाम्बिकां प्रति प्रेषयित्वा वादिराजमुनीश्वरास्तं बालं हिंसितवन्त इत्यपप्रथां प्रथयां चक्रुः । तदा तदसहमाना मूकाम्बिका तं बालं स्वप्ने जाग्रदवस्थायां च कशाताडन-सर्पादिना बहुधा भीषयित्वा वादिराजमुनिचरणसमीपमेव प्रापितवती किलेति वादिराजमुनयस्तमेव बालं जनसंसदि दर्शयित्वा स्वापवादं परिहृतवन्त इति **कथां**[२] सूचयितुं इयं स्तुतिः कृता ॥ ५६ ॥

**क्वचित् पृथिव्यां परितश्चरन्ती नभःस्थलं क्वापि मुहुर्व्रजन्ती ।**
**विपक्षविध्वंसविधौ स्फुरन्ती कात्यायनी कन्दुकवद्विभाति ॥५७॥**

पुनश्च तामेव स्तौति – **क्वचिदिति** । **विपक्षविध्वंसविधौ** विपक्षस्य दैत्य-समूहस्य विध्वंसविधौ हननकर्मणि **क्वचित्** कदाचित् । तेषु भूम्यामेव चरत्सु स्वयमपि **पृथिव्यां** भूमौ । **परितः** इतस्ततः । **चरन्ती** सञ्चरन्ती । तेषु नभस्थलं गतेषु सत्सु । **नभस्थलं चापि मुहुः व्रजन्ती** अत एव **स्फुरन्ती** । **कात्यायनी कन्दुकवद्विभाति**। कन्दुको यथा भूमौ वियति च मुहुर्मुहुः सञ्चरणात् इयमपि कन्दुकवद्विभातीति भावः । **समस्यापूरकमिदं पद्यम्** ॥ ५७ ॥

**सह्यपर्वतः**

**सह्योऽप्यसह्योऽसि गिरे पापानामस्तु तत् तथा ।**
**अचलस्त्वं चलसि मन्मनसस्तन्न रोचते ॥ ५८ ॥**

---

१ मूकाम्बिका महादेवी प्रसन्ना स्वयमेव हि ।
आसदापादितावर्णं वादिराजे समक्षिणोत् ॥
मूकीचकार तच्छत्रूंस्ततस्तेन स्तुताऽभवत् ।
विष्णुदासस्यानुकूलाः स्वयमेव हि देवताः ॥
– इति श्रीरघुनाथाचार्यकृत(श्रीवादिराज)वृत्तरत्नसङ्ग्रहे (१/६४,६५)

सह्यपर्वतं वर्णयति – **सह्योऽपीति** । **हे गिरे** सह्यपर्वत । **त्वं सह्योऽपि** सह्यनामकोऽपि । सहनयोग्योऽपीति ध्वनिः । **पापानां** दुरितानाम् । **असह्योऽसि** सहनायोग्योऽसि पापपरिहारकोऽसीत्यर्थः । सह्यस्यासह्यत्वं विरुद्धं विषयभेदेन विरोधपरिहारः। अत एव **विरोधाभासालङ्कारः** । 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इत्युक्तेः । इति यत् । **तत् तथाऽस्तु** । तव पापासह्यत्वमङ्गीकृतम् । पापपरिहारस्येष्टत्वादिति भावः। **अचलः त्वं** चलनरहितस्त्वम् । **मन्मनसः** ममान्तःकरणात् । **चलसि** इति यत् । अस्मन्मनोगोचरो न भवसीति यत् । **तन्न रोचते** तदनुकूलं न भवतीत्यर्थः । अयं विरोधो नाङ्गीक्रियते । उत्तमवस्तुविस्मरणस्यानिष्टत्वादिति भावः । पापं परिहृत्यास्मद्ध्यानविषयो भवेति तात्पर्यार्थः ॥ ५८ ॥

## हरिहरक्षेत्रम्

**मुरपुरहर लक्ष्मीपार्वतीकेलिलोल स्फुरदसितसिताङ्गासह्यचक्रत्रिशूल ।**
**परतरगुरुमूर्ते पावनापारकीर्ते हरिहर तव पादाम्भोजयुग्मं नतोऽस्मि ॥५९॥**

हरिहरमुपवर्णयति – **मुरपुरहरेति** । **हे मुरपुरहर** मुरं मुरनामकमसुरम् । पुराणि असुराधिष्ठितानि त्रिपुराणि हरतीति मुरपुरहरस्तस्य सम्बुद्धिः । अत्र मुरहरो हरिः । पुरहरो हरः । एवमुत्तरत्रापि द्रष्टव्यम् । **लक्ष्मीपार्वतीकेलिलोल** लक्ष्म्याः पार्वत्याश्च केल्यां क्रीडायां लोलः आसक्तः तस्य सम्बुद्धिः । 'लोलश्चश्चलसतृष्णयो'रित्यमरः । **स्फुरदसितसिताङ्ग** स्फुरदुज्वलत् असितं श्यामं सितं शुभ्रं चाङ्गं यस्य स तथोक्तस्तस्य सम्बुद्धिः । **असह्यचक्रत्रिशूल** असह्यं सोढुमशक्यं चक्रं सुदर्शनं त्रिशूलं च यस्य स तथा तस्य सम्बुद्धिः । [१]**परतर गुरुमूर्ते** परतरः सर्वोत्तमः गुरुर्ज्ञानोपदेष्टा इति मूर्तिः यस्य स तथा तस्य सम्बुद्धिः । **पावनापारकीर्ते** पवित्रनिरवधिककीर्ते । **हरिहर** हरिणा सहितो हरः हरिहरः तस्य सम्बुद्धिः । हरिहरयोर्वैलक्षण्यद्योतनायेमानि विशेषणानि । **तव पादाम्भोजयुग्मं नतोऽस्मि** । **जातिरलङ्कारः** ॥ ५९ ॥

---

[१] मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । – गीता (७/७)

**हरे भवहरे तेऽङ्घ्रौ भक्तिर्मुक्तिप्रदाऽस्तु मे ।**
**वैराग्यभाग्यं[१] वितर हर गौरीमनोहर ॥ ६० ॥**

हर इति । हरे श्रीनारायण । **भवहरे**[२] संसारनिवर्तक । **ते** तव । **अङ्घ्रौ** चरणे । **मुक्तिप्रदा भक्तिः मे** मम **अस्तु** भूयात् । हरेर्मोक्षप्रदानात् तं प्रति तत्साधनयाच्ञा युक्तेति भावः । **गौरीमनोहर** पार्वतीप्रिय । **हे हर वैराग्यभाग्यं** हरिभक्तिसाधनविरक्तिसम्पदम् । **मे** मह्यं **वितर** देहि । हरस्य वैराग्याभिमानित्वादिति भावः ॥ ६० ॥

**यदेकेन न वध्योऽरिस्ततो हरिहरावुभौ ।**
**सहागतावर्धदृश्यावैक्यं चेत् शत्रुणा जितम् ॥ ६१ ॥**

केचन मूर्खाः हरिहरयोरेकमूर्तिगतत्वेनैक्यमिति वदन्ति । तान् प्रति युक्त्या तयोरैक्यं दूषयितुमाह – **यदिति** । **यत्** यस्मात् कारणात् । **अरिः** शत्रुः गुहाख्यो दैत्यः । **एकेन** हरिणा हरेण वा । **न वध्यः** हन्तुं योग्यो न भवति तादृशवरदानादिति भावः । **ततः** तस्मात् कारणात् । **उभौ हरिहरौ अर्धदृश्यौ** मूर्तेरेकैकभागदृश्यौ सन्तौ **सहागतौ** शत्रुं हन्तुं मिलित्वा प्राप्तौ । तस्मात् कारणान्न तयोरैक्यमिति भावः । विपक्षे बाधकमाह। ऐक्यं चेदिति । **ऐक्यं चेत्** हरिहरयोरैक्यं चेत् तदा । **शत्रुणा** गुहाख्यदैत्येन । **जितं** विजितं एकेनावध्यत्वादिति भावः ॥ ६१ ॥

---

१ यमवायुशिवेन्द्राश्च ज्ञेया धर्मादिदेवताः । – इति तन्त्रसारसङ्ग्रहे (१/५३)
वैराग्याभिमानिने रुद्राय नमः । – इति तन्त्रसारोक्तपूजापद्धतौ ।
विद्याकामस्तु गिरिशम् – भागवते(२/३/७)
ज्ञानं महेश्वरादिच्छेत् । – स्मृतिः

२ विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया ।
–इति म.भा.ता.निर्णयोद्धृत(१/७८)भविष्यत्पर्ववचनम् ।
मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः । – हरिवंशवचनम् (३/८०/३०)

**अर्धनारीश्वरः शम्भुर्यथा भेदेऽपि दृश्यते ।**
**मूर्तेरेकैकभागस्थौ तथा हरिहराविमौ ॥ ६२ ॥**

एकशरीरस्थयोरपि भेदं दृष्टान्तमुखेन दर्शयति – **अर्धनारीश्वर** इति । **यथा शम्भुः** शिवः । **भेदेऽपि** पतिपत्नीभावात् स्त्रीपुंभावाद्वा स्वस्य स्त्रीसकाशाद्भेदे सत्यपि । **अर्धनारीश्वरः** अर्धे शरीरार्धभागे स्थिता नारी अर्धनारी तस्या ईश्वरः । शरीरार्धभागे स्थिता नारी यस्य सः अर्धनारिः स चासावीश्वर इति वा । तादृशः सन् नारीभूतार्धशरीरः सन्नित्यर्थः । **दृश्यते** नारीपुरुषोभयात्मकः सन्दृश्यते । **तथा उभौ** [१] **हरिहरौ** । **मूर्तेः** प्रतिमायाः । **एकैकभागस्थौ** सव्येतरप्रदेशस्थौ दृष्टान्तमुखेन दृश्यते । अतः एकमूर्तिगत्वेऽपि न हरिहरयोरैक्यमिति भावः ॥ ६२ ॥

**निर्विषं वत्सनाभिश्च यथैकामाश्रितौ लताम् ।**
**तथा हरिहरौ भिन्नतरावप्येकमूर्तिगौ ॥ ६३ ॥**

पुनरपि तयोर्भेदं दृष्टान्तान्तरेण साधयति – **निर्विषमिति** । **निर्विषं** विषनिवर्तकौषधविशेषः । **वत्सनाभिश्च** विषभेदश्च । **भिन्नतरावपि यथैकां लतामाश्रितौ** एकस्यां लतायामूर्ध्वाधोभागमाश्रित्य स्थितौ । **तथा हरिहरौ भिन्नतरावपि** निर्विषवत्सनाभिवद्विरुद्धधर्माधिकरणत्वेनात्यन्तभिन्नावपि । **एकमूर्तिगौ** एकप्रतिमामाश्रित्य तिष्ठतः। गमेर्डप्रत्ययः । हरिहरयोर्लोकप्रसिद्ध्या पालकत्वसंहर्तृत्वद्योतनाय निर्विषवत्सनाभिदृष्टान्तः ॥ ६३ ॥

वेणुपुरस्थः अश्वत्थः

**मा याहि पुष्करमहीमथवा प्रयागं**
**काशीं गयां बदरिकाश्रममत्यसाध्यम् ।**

---

१ अभजद्भुवनप्रभू हरीशौ –इति सुमध्वविजये (१३/४४)

**सेतुं च राघवकृतं वरतुङ्गभद्रा-**
**तीरस्थपिप्पलगृहं हरिमेहि सिद्ध्यै ॥ ६४ ॥**

वेणुपुरस्थाश्वत्थं वर्णयति – **मा याहीति** । (हे तैर्थिकजन) **सिद्ध्यै** हरि-भक्त्यादिसकलपुरुषार्थसिद्ध्यै । **पुष्करमहीं** पुष्करक्षेत्रं **अथवा प्रयागं** प्रयागक्षेत्रम् । **काशीं** काशीक्षेत्रम् । **गयां** गयाक्षेत्रम् । **अत्यसाध्यं** अत्ययासगम्यम् । **बदरिकाश्रमं** । **राघवकृतं** श्रीरामरचितम् । **सेतुं च मा याहि** मा गच्छ । तद्यात्रां माकुर्वित्यर्थः । (किन्तु) **वरतुङ्गभद्रातीरस्थपिप्पलगृहं** । वरा श्रेष्ठा तुङ्गभद्राख्यनदी तस्यास्तीरे तिष्ठतीति वरतुङ्गभद्रस्थः स चासौ पिप्पलोऽश्वत्थश्च स एव गृहं यस्य स तथोक्तः । *अश्वत्थसन्निहित इत्यर्थः तम् । **हरिं एहि** आगच्छ । तद्यात्रां कुर्वित्यर्थः । 'आङ्पूर्वात् इण् गतौ' इति धातोर्लोट् । अत्यायाससाध्यपुष्करादिक्षेत्रयात्रया लभ्यं पुण्यमल्पायास-साध्याश्वत्थसन्निहितहरियात्रया भवतीति भावः ॥ ६४ ॥

**[१]पादस्थानल्पपादस्तनुनिहिततनुः कोमलाग्रस्थितास्यः**
**स्कन्दस्कन्धोऽग्र्यशाखास्थितकरनिकरः श्रीधराश्लिष्टपार्श्वः ।**
**व्याप्याश्वत्थं मुकुन्दस्त्रिदशपरिवृतस्तुङ्गभद्रातिभद्रे**
**वेणुग्रामे सदाऽऽस्ते सकलजनमनोऽभीष्टदायी दयालुः ॥ ६५ ॥**

पुनरपि श्लोकत्रयेण अश्वत्थं वर्णयति – **पादस्थेत्यादिना** । [२]**पादस्थानल्पपादः** पादेषु वृक्षमूलेषु स्थिताः अनल्पाः बहवः पादाः हरिचरणाः यस्य सः । **तनुनिहिततनुः** तनौ वृक्षमध्ये निहिता तनुः शरीरं यस्य स तथा । **कोमलाग्रस्थितास्यः** कोमलेषु वृक्षाग्रेषु

---

* अश्वत्थं मन्दवारे च समुद्रं पर्वणि स्पृशेत् । – (स्मृति)

१ पादोपान्तनमन्महामुनिगणं हेमप्रदीप्ताम्बरं
श्रीमद्रत्नकलापमग्र्यकटकैर्विभ्राजितं हाटकैः ।
दृष्ट्वा तं धरणीधरं सुवनमालोल्लासिनं सुन्दरं
स्वानन्दाकृतिमस्मरन्मुररिपुं स्वानन्दतीर्थस्तदा ॥ (सुमध्वविजये - ६/५७) इतिवत् ।

स्थितानि आस्यानि वदनानि यस्य सः । **अग्रशाखास्थितकरनिकरः** अग्रासु वृक्षशाखासु स्थिताः करनिकरः हस्तसमूहः यस्य सः । **श्रीधराश्लिष्टपार्श्वः** श्रीश्च धरा च श्रीधरे ताभ्यामाश्लिष्टे पार्श्वे यस्य स तथा । **त्रिदशपरिवृतः** त्रिदशैर्देवैः परिवृतः । **सकलजनमनोऽभीष्टदायी** सकलसज्जनानां मनसोऽभीष्टानि ददातीति तथोक्तः । **दयालुः** दयाशीलः । **मुकुन्दः** पुरुषसूक्तप्रतिपाद्यः श्रीनारायणः । **तुङ्गभद्रातिभद्रे** तुङ्गभद्रायाः महानद्याः अत्यन्तं भद्रे मनोहरे । **वेणुग्रामे** अपभ्रष्टभाषया **बिदरहळ्ळि** सञ्ज्ञके ग्रामे । **अश्वत्थं व्याप्य सदा आस्ते** इति सम्बन्धः । यावन्तो वृक्षमूलस्कन्धशाखादयः तावदवयवैः तं व्याप्य तिष्ठतीति भावः । **स्वभावोक्तिरलङ्कारः** ।। ६५ ।।

**मध्यस्थकृष्ण परिपालय भक्तवर्गं**
**रुद्राश्रिताग्र रुजमर्दय सेवकस्य ।**
**पद्मासनावसथमूल सृजास्य तन्तुं**
**सद्वन्द्य पिप्पलतरो वितराखिलेष्टम् ।।६६।।**

**मध्यस्थेति** । हे **मध्यस्थकृष्ण** मध्ये तिष्ठतीति मध्यस्थः कृष्णः यस्य सः तस्य सम्बुद्धिः । **'मध्यतो विष्णुरूपाय'** इति[३] स्मृतेः । **भक्तवर्गं** भक्तजनसमूहं **परिपालय** । विष्णोः पालकत्वादिति भावः । **रुद्राश्रिताग्र** रुद्रेण आश्रितं अग्रं यस्य स तस्य सम्बुद्धिः। **अग्रतः शिवरूपायेति** स्मृतेः । **सेवकस्य रुजं** रोगं **अर्दय** नाशय । रुद्रस्य संहारहेतुत्वादिति भावः । [४]रुजं द्रावयतीति व्युत्पत्तेश्च । **पद्मासनावसथमूल** पद्मासनस्य

---

२ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । – पुरुषसूक्त
अनेकबाहूदरवक्त्रनेत्रम् । – गीता(११/१६)

३ मूलतो ब्रह्मरूपाय **मध्यतो विष्णुरूपिणे** ।
अग्रतः शिवरूपाय वृक्षराजाय ते नमः ।। – इति अश्वत्थमन्त्रः ।

'रजनस्तनौ चैव विरिञ्चि आसीत् तमस्तनौ शर्व इति त्रयोऽस्मात्' । – म.भा.ता.नि.(३/२१)

'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः' । – विष्णुपुराणे

४ **रुजं द्रावयते** यस्माद्रुद्रस्तस्माज्जनार्दनः । – इति ब्रह्मसूत्रभाष्योदाहृत(१/३/३)वचनात् ।

ब्रह्मणः आवसथं निवासस्थानभूतं मूलं यस्य तस्य सम्बुद्धिः । **मूलतो ब्रह्मरूपायेति** स्मृतेः । **अस्य** सेवकस्य । [१] **तन्तुं** सन्तानम् । **सृज** उत्पादय । ब्रह्मणः सृष्टिकर्तृत्वादिति भावः । **सद्वन्द्य** सद्भिर्वन्द्य । **पिप्पलतरो** हे अश्वत्थवृक्ष । **अखिलेष्टं** सर्वाभीष्टम् । **वितर** प्रयच्छ । पिप्पलतरो इति पूर्वोक्तान्वयत्रयेऽपि विशेष्यतया सम्बन्धः ।। ६६ ।।

**तुङ्गातरङ्गपरिनर्तनपूतवातसङ्गेन तेऽङ्घ्रिप चलन्ति दलानि भान्ति ।**
**जन्मान्तरोत्थदृढमूलदुरन्तदुष्कृत्युन्मूलनोद्यतकराङ्गुलिकान्तिमन्ति** ।।६७।।

**तुङ्गेति** । हे **अङ्घ्रिप** अश्वत्थवृक्ष । [२] **तुङ्गातरङ्गपरिनर्तनपूतवातसङ्गेन** तुङ्गायास्तरङ्गेषु परितो नर्तनेन पूतो वातस्तस्य सङ्गेन । **चलन्ति** इतस्ततो गच्छन्ति । **ते दलानि** । **जन्मान्तरोत्थदृढमूलदुरन्तदुष्कृत्युन्मूलनोद्यतकराङ्गुलिकान्तिमन्ति** जन्मान्तरोत्थाः दृढमूलाः दुरन्ताः याः दुष्कृतयः स्वभक्तदुष्कर्माणि तासां उन्मूलने उत्पाटने उद्यतानां कराङ्गुलीनां कान्तिर्येषु वर्तते इति तथोक्तानि । **भान्ति** विराजन्ते । यथा दृढतरोरुत्पाटनाय तद्ग्राहिस्वहस्ताङ्गुलिमितस्ततश्चालयति तथा त्वमपि स्वहस्तस्थानीयशाखाग्रस्थितानि अङ्गुलीयस्थानीयपत्राणि चालयसीत्युपमागर्भोत्प्रेक्षालङ्कारः। जन्मान्तरीयदृढपापान्यपि तव प्रदक्षिणादिना नश्यन्तीति भावः ।। ६७ ।।

### वेणुपुरस्थः सोमेश्वरः

**सोमेश्वराय [३] सितभूतिविकस्वराय प्रेमप्रवृद्धगिरिजाहृदि भास्वराय ।**
**तुङ्गोल्लसत्पवनपावितवंशपल्लीमाङ्गल्यहेतुचरिताय नमः शिवाय** ।।६८।।

---

१ तन्तुं - सन्तानं - औरससन्तानं, शिष्यसन्तानं च । वंशो द्विधा । विद्यया जन्मना च - इति सि.कौ.

२ 'तुङ्गा' इत्यत्र नामैकदेशे नामग्रहणन्यायात् 'तुङ्गभद्रा' इत्यर्थः ।

३ त्रिनेत्रपङ्कचालसितपञ्चवक्त्रं शुचिस्मितम् ।
ऊर्ध्वपुण्ड्रधरं चक्रशङ्खाङ्कितभुजद्वयम् ।।
पद्माक्षतुलसीमालाविद्योतितशिरोधरम् ।। – सरसभारतीविलसे (२/३६,३७)

तत्रत्यं सोमेश्वरं स्तौति – **सोमेश्वरेति**। **सितभूतिविकस्वराय** सितया भूत्या भस्मना विकस्वराय विकसनशीलाय। **प्रेमप्रवृद्धगिरिजाहृदि** प्रेम्णा प्रवृद्धं प्रेमप्रवृद्धम्। तच्च तत् गिरिजायाः पार्वत्याः हृच्च तस्मिन्। **भास्वराय** भासनशीलाय। [1]स्थेश-भासेत्यादिना वरच् प्रत्ययः। **तुङ्गोल्लसत्पवनपावितवंशपल्लीमाङ्गल्यहेतुचरिताय**। तुङ्गायाः उल्लसत्पवनेन पावितायाः वंशपल्याः बिदरहळ्ळीनामकग्रामस्य। माङ्गल्यहेतुः माङ्गल्यकारणं चरितं यस्य स तथा तस्मै। **सोमेश्वराय शिवाय नमः** इति सम्बन्धः। **अन्ते शिवान्तर्भूतनमःशिवायेति**[2] **पञ्चाक्षरीगर्भमिदं पद्यम्**॥ ६८॥

बङ्कापुरस्थः केशवः

**शङ्खाम्भोजगदासुदर्शनधरं सङ्कीर्त्यमानं सुरैः**
**कैङ्कर्यप्रियलक्ष्मणेन्द्ररचितालङ्कारपूजोत्सवम्।**
**पङ्कोद्भूतसमानलोचनयुगं बङ्कापुरश्रीकरं**
**हुंकारस्वनधिकृताश्रितजनातङ्कं भजे केशवम्** ॥ ६९॥

बङ्कापुरस्थं[3] केशवं वर्णयति – **शङ्खेति**। **शङ्खाम्भोजगदासुदर्शनधरं** दक्षिणोर्ध्व-करे शङ्खः। तदधःकरे पद्मम्। वामाधःकरे गदा। तदूर्ध्वकरे सुदर्शनमिति विवेकः। अनेन केशवमूर्तिलक्षणमुक्तं भवति। **सुरैः** ब्रह्मादिदेवैः। **सङ्कीर्त्यमानं** सम्यक् स्तूयमानम्। 'कॄत संशब्दन' इति धातोर्ण्यच् प्रत्ययः लटः शानजादेशः। **कैङ्कर्यप्रियलक्ष्मणेन्द्र-**

---

[1] पा.सू. (३/२/१७५)

[2] उद्देशनतियुङ्मन्त्रः स्वयमेव शिवस्य तु। – इति तन्त्रसारसङ्ग्रहे (४/७६)

[3] केशवो मधुसूदनः सङ्कर्षणदामोदरौ।
सवासुदेवप्रद्युम्ना दक्षोच्चकरशङ्खिनः॥ – इति तन्त्रसारसङ्ग्रहे (१/२४)

केशवस्याम्बुजं शङ्खं चक्रं दण्डस्तथाऽऽयुधम्। – इति पञ्चरात्रे।

श्रीमत्पङ्कजशङ्खचक्रगदया सम्भूषिते केशवे।
– इति श्रीवादिराजश्रीचरणविरचितकेशवादिचतुर्विंशतिमूर्तिस्तुतौ।

**रचितालङ्कारपूजोत्सवं** किङ्करस्य भावः कैङ्कर्यम् । तदेव प्रियं प्रीतिविषयः यस्य स तथोक्तः । स चासौ लक्ष्मणेन्द्रश्च तेन रचितः कृतः अलङ्कारपूजोत्सवः यस्य स तथा तम्। **पङ्कोद्भूतसमानलोचनयुगं** पङ्कोद्भूतस्य पङ्कजस्य समानं सदृशं लोचनयुगं यस्य स तथा तम् । **बङ्कापुरश्रीकरं** बङ्काख्यनगरस्य सम्पत्करम् । **हुंकारस्वनधिकृताश्रित-जनातङ्कं** हुङ्कारध्वनिना धिकृतः निराकृतः आश्रितजनातङ्कः भक्तजनभयं येन स तथा तम् । **केशवं** अहं **भजे** सेवे ।। ६९ ।।

वरदा(नदी)

**स्मरदाश्रितदुष्कर्मगुरुदाहविदारिणीम् ।**
**वरदां हरिदासेष्टवरदानरतां भजे ।। ७० ।।**

वरदां वर्णयति – **स्मरदाश्रितदुष्कर्मगुरुदाहविदारिणीं**[१] स्मरन्तश्च आश्रिताश्चेति वा । तेषां दुष्कर्माण्येव गुरुदाहस्तीव्रसन्तापः । तं विदारयतीति तथोक्ता ताम् । जलस्य दाहनिवर्तकत्वादिति भावः । **हरिदासेष्टवरदानरतां** हरिदासानां इष्टवरदाने रता ताम्, अत एव । **वरदां** वरदानाम्नीं अहं **भजे** ।। ७० ।।

वरदातीरस्थमधुलिङ्गम्

**हर सायकनिर्दग्धपुर गायकधूर्धर ।**
**सुरनायक दैत्येन्द्रवरदायक पाहि माम् ।। ७१ ।।**

वरदातीरस्थं मधुलिङ्गं वर्णयति – **हर** इति । **सायकनिर्दग्धपुर** सायकेन नितरां दग्धानि पुराणि येन सः, तस्य सम्बुद्धिः । **गायकधूर्धर** गायकानां भक्तानां धुरं धारयतीति तथोक्तः तस्य सम्बुद्धिः । **दैत्येन्द्रवरदायक** दैत्येन्द्रस्य मधुनामकदैत्यश्रेष्ठस्य वरदायकस्तस्य सम्बुद्धिः । **सुरनायक** सुराणां इन्द्रादीनां नायकः श्रेष्ठः, तस्य सम्बुद्धिः । **हे** हे शम्भो । **मां पाहि** । इति सम्बन्धः ।। ७१ ।।

---

१ जलरूपत्वात् दाहनिवर्तकत्वं तु युक्तम् ।

धर्मगङ्गा(नदी)

**हे धर्मगङ्गे पापौघभङ्गे तुङ्गतरङ्गिणि ।**
**चेतो मदीयं सद्धर्मकर्मण्येव स्थिरं कुरु ॥ ७२ ॥**

धर्मगङ्गां स्तौति – **हे धर्मेति** । **पापौघभङ्गे** पापानां ओघानां भङ्गो नाशो यया स तस्याः सम्बुद्धिः । **तुङ्गतरङ्गिणि** तुङ्गास्तरङ्गाः अस्या वर्तत इति तुङ्गतरङ्गिणी तस्याः सम्बुद्धिः । **हे धर्मगङ्गे** धर्मनदि । गङ्गासान्निध्याद्गङ्गेत्युक्तम् । **मदीयं** मम विद्यमानम् । **चेतः** मनः । **सद्धर्मकर्मण्येव** सन्तश्च ते धर्माश्च सद्धर्माः तेषां कर्म तस्मिन्नेव । **स्थिरं कुरु** । इति सम्बन्धः । धर्मगङ्गापदेन धर्मे स्थिरीकरणशक्तिरस्तीति सूचनाय **हेतुरलङ्कारः** ॥ ७२ ॥

शाल्मली(नदी)

**नदी मुदेऽस्त्वियं प्रत्यङ्नदीनहृदयङ्गमा ।**
**गंगोत्तुङ्गा दृश्यतेऽद्धा रम्याष्टम्यां यदम्भसि ॥ ७३ ॥**

इदानीं पश्चिमसमुद्रगामिनीं शाल्मलीनदीं स्तौति – **नदीति** । **प्रत्यङ्नदीन-हृदयङ्गमा** नदीनामिनः स्वामी नदीनः समुद्रः । प्रत्यङ् पश्चिमश्चासौ नदीनश्च प्रत्यङ्नदीनः । पश्चिमसमुद्रः । तस्य हृदयङ्गमा प्रिया । **इयं** शाल्मलीति सञ्ज्ञिता । **नदी**। **मुदे** सन्तोषाय । **अस्तु** । **यदम्भसि** यस्याः **अम्भसि** उदके । **रम्या** मनोहरा । **उत्तुङ्गा गङ्गा** भागीरथी । **अष्टम्यां** गङ्गाष्टमीति सञ्ज्ञितायां अष्टमीतिथौ । **अद्धा** प्रत्यक्षतयैव **दृश्यते** । गोकर्णक्षेत्रसमीपे समुद्रसङ्गमस्थले लवणजलभरितेऽप्येतस्मि-न्नदीजले भाद्रपदशुद्धाष्टम्यां गङ्गा आयातीति **पौराणिकीकथा** । तदा लवणजलमध्ये स्वादु गङ्गोदकं दृश्यते किल । तदिदमुक्तमुत्तरार्धेन ॥ ७३ ॥

**भर्तुरग्रे स्वलावण्यविस्तृतेरविवेकिनीम् ।**
**स्वासेवितां सखीमेतां सर्वसेव्यां करोति सा ॥ ७४ ॥**

प्रकारान्तरेणापि तामेव वर्णयति – **भर्तुरिति**। **भर्तुः** समुद्रस्य। **अग्रे स्वलावण्यविस्तृतेः** स्वस्मिन् स्वसम्बन्धिजले यल्लावण्यं समुद्रसङ्गमेन जातो लवणाभावः। तस्य विस्तृतेः विस्तारात्। **अविवेकिनीं** इदं नदीजलमिदं समुद्र-जलमिति विवेचयितुं अशक्या। अत एव **स्वासेवितां स्वैः** स्नानपानादिना सेव्याम्। **करोति**। 'आत्मीयज्ञातिधनवाची' स्वशब्द इति स्वीयार्थेऽपि स्वशब्दः। इति नदीनां स्वभाववर्णनम्। भर्तुरग्रे स्वसौन्दर्यविस्तारेण गर्ववतीयमिति स्वभर्तृबन्धुभिश्चोपेक्षितां विवेकशून्यां काचन नारीं तस्याः बुद्धिमती सखी स्वयमेवागत्य प्रियोक्त्यादिना **भर्त्रा** अन्यैश्च सत्कृतां तथा करोति तथेति ध्वनितोऽर्थः॥ ७४॥

**सोदाग्रामस्थः त्रिविक्रमः**

**गङ्गा माध्वयतेः कीर्त्यै स्थानश्रीभूमनोहरम्।**
**कृत्वा त्रिविक्रमं चक्रे पितृमात्रग्रजोत्सवम्॥ ७५॥**

सोदाग्रामे वादिराजमुनिना स्वेनैव देवालयतटाकादिनिर्माणादिना पूजितस्य तस्यैवोपरि कृपया [१]गङ्गातीरादागतस्य त्रिविक्रमस्य वर्णनं करोति – **गङ्गेति**। **गङ्गा** भागीरथी। **माध्वयतेः** मध्वमुनिसम्बन्धिनो वादिराजयतेः। **कीर्त्यै**। स्वप्रेषितं **त्रिविक्रमं**। **स्थानश्रीभूमनोहरं** स्थानश्रियः देवालयसम्पदः भुवः निवासभूम्याश्च। मनोहरं मनःप्रियम्। **कृत्वा** स्वयोग्यदेवालयश्रीभूम्योरुभयोरपि प्रीतिं कृत्वेत्यर्थः। **पितृमात्रग्रजोत्सवं** पितुः स्वाङ्गुष्ठनखात् स्वजनकस्य त्रिविक्रमस्य। मात्रोः मातृस्थानीययोः पितृपत्न्योः श्रीभूम्योः अग्रजस्य स्वजन्मनः पूर्वं स्वनखाग्रादपि अग्रभागस्थनाभिकमलादुत्पन्नत्वेन द्वेधाऽप्यग्रजस्य वायुरूपमध्वस्य च उत्सवं सम्भ्रमं **चक्रे** इति सम्बन्धः। स्वभक्तप्रियस्य प्रीतिकरणात् गङ्गापित्रोरेव स्वपितृत्वात् स्वपितृमातृप्रीतिकरणात् मध्वस्योत्सवः। स्वपुत्रस्य मनःप्रीतिकारणात् श्रीभूम्योः। स्वपत्नीसंयोगकरणात् स्वभक्तप्रीतिकरणाच्च स्वपितुरिति त्रेधाविभागो द्रष्टव्यः। **उत्प्रेक्षालङ्कारः**। **अद्भुतोऽयं रसः**॥ ७५॥

---

१ **'काशीक्षेत्रदिन्द बन्द'** – इति त्रिविक्रमदेवालयस्थशिलाशासने

**[1]त्रिविक्रमं रम्यगदारिशङ्खसरोजमालाधरमिन्दुवर्णम् ।**
**मनोरमाङ्गं यतिवादिराजप्रतिष्ठितं नौमि सदा प्रसन्नम् ॥ ७६ ॥**

पुनरपि त्रिविक्रमं वर्णयति – **त्रिविक्रमेति** । **रम्यगदारिशङ्खसरोजमालाधरं** गदा च अरिश्च शंङ्खं च सरोजं च माला चेति द्वन्द्वः । रम्यास्ताः दक्षोर्ध्वादिहस्तचतुष्टयेन धरतीति तथोक्तः । पद्मधारिहस्ताग्रे माला तिष्ठतीति भावः । **इन्दुवर्णं** इन्दोर्वर्ण इव वर्णो यस्य स तथा तम् । बहुमाणिक्यशिलारूपत्वतोऽतिधवलत्वादेवमुक्तम् । **मनोहराङ्गं** मनोहराणि अङ्गानि हस्तपादादीनि यस्य स तथा तम् । **यतिवादिराजप्रतिष्ठितं** देवालयनिर्माणेन स्थापितम् । **सदा प्रसन्नं** सदा प्रसादाभिमुखम् । **त्रिविक्रमं नौमि** इति सम्बन्धः ॥ ७६ ॥

**मञ्जुगुणिग्रामस्थो वेङ्कटेशः**

**मनोहरगिरिद्रोणीवासं श्रीशं सतां वशम् ।**
**धनुर्बाणधरं भाग्यकरं पापहरं भजे ॥ ७७ ॥**

मञ्जुगुणिग्रामस्थं वेङ्कटपतिं स्तौति – **मनोहरेति** । **मनोहरगिरिद्रोणीवासं** मनोहरगिरिद्रोण्यां मञ्जुगुणिग्रामस्थरम्यपर्वतगुहायां वासो यस्य स तथा तम् । तत्स्थलस्य मनोहरत्वादेव वासः । अन्यथा पादुकाशोभिपादत्वात् गमनमेव न सम्भा-

---

[1] वादिराजेन्द्रवरदं सोदापुरनिवासिनम् ।
मोदप्रदं सदा वन्दे माधवं तं त्रिविक्रम् ॥
योऽसौ धवलगङ्गायाः पार्श्वे तिष्ठति सर्वदा ।
देशे देशे च विख्यातमासेवे तं त्रिविक्रमम् ॥
अग्रे निधाय श्रीदेवीं पृष्ठे पार्श्वे च सज्जनान् ॥
स्वर्गिभिः परितः सेव्यो मध्ये भाति त्रिविक्रमः ।
यावच्चन्द्रश्च सूर्यश्च यावत् तिष्ठति मेदिनी ॥
तावत् त्रिविक्रमः सोऽयं पूज्यस्तिष्ठतु सज्जनैः ॥ – इति च श्रीवादिराजतर्थिकृतश्रीत्रिविक्रमस्तोत्रे

नित्यं पद्मगदारिशङ्खसहितश्चित्ते मम त्रिक्रमो...
– इति श्रीवादिराजश्रीचरणविरचितकेशवादिचतुर्विंशतिमूर्तिस्तुतौ ।

वितमिति भावः । **धनुर्बाणधरं** इति ध्यानम् । एतच्चोपलक्षणम् । चक्रशङ्खावपि ग्राह्यौ । प्रसिद्धत्वात् तदनुक्तिः । **भाग्यकरं पापहरम्** । **सतां** सज्जनानाम् । **वशं** अधीनम् । **श्रीशं** लक्ष्मीरमणं वेङ्कटपतिम् । अहं **भजे** सेवे । **स्वभावोक्तिरलङ्कारः** ।। ७७ ।।

**खलमृगमृगयार्थं पादुकाशोभिपादः**
**करधृतशरचक्रोद्दामशङ्खाग्र्यचापः ।**
**सकलभुवि चरित्वा मञ्जुगुण्याख्यरम्य-**
**स्थलसदनगतोऽभूद्वेङ्कटेशो मुकुन्दः ।। ७८ ।।**

पुनरपि मूर्तिध्यानपूर्वकं तमेव स्तौति – **खलमृगेति** । **पादुकाशोभिपादः** पादुकाभ्यां शोभितौ पादौ यस्य स तथा । **करधृतशरचक्रोद्दामशङ्खाग्र्यचापः** करैर्धृताः शरः चक्रं उद्दामशङ्खः अग्र्यचापश्च येन स तथोक्तः । **वेङ्कटेशो मुकुन्दः** । **खलमृगमृगयार्थं** । **सकलभुवि** समस्तभूम्याम् । **चरित्वा** सञ्चारं कृत्वा । **मञ्जुगुण्याख्यरम्यस्थलसदनगतः** मञ्जुगुण्याख्यरम्यस्थले यत्सदनं मन्दिरं तत्र गतः स्थितः **अभूत्** । इति सम्बन्धः ।।७८।।

**एणभैरवस्थो भैरवः**

**यस्य भैरवनादेन विद्रवन्त्यघराशयः ।**
**एणा इव भयान्नित्यं तं नतोऽस्म्यैणभैरवम् ।। ७९ ।।**

गोकर्णपूर्वभागे सह्याचलशृङ्गे एणभैरवाख्यं पुण्यक्षेत्रमस्ति । तदधिपतिं भैरवं स्तौति – **यस्येति** । **यस्य भैरवनादेन** भयङ्करगर्जितध्वनिना **अघराशयः** पापसमूहाः । **भयान्नित्यं** । **एणा इव** कृष्णमृगा इव । **विद्रवन्ति** । अत एव । **एणभैरवं** एणभैरवनामकम् । **तं भैरवं नतोऽस्मि** । इति सम्बन्धः ।। ७९ ।।

**गोकर्णस्थः शिवः**

**ये विष्णोः पदपद्मचिन्तनरतास्तत्कर्मनिष्ठाश्च ये**
**ये तद्भक्तिपरायणाः शुभधियः येऽर्चन्ति मां चानिशम् ।**

**एकान्ते तदभीष्टमाशु वसुधे देहीति गां बोधयन्**
**श्रीगोकर्णकृतालयो विजयते देवः स गौरीधवः ॥ ८० ॥**

गोकर्णस्थितं शिवं वर्णयति – य इति। **ये** जनाः। **विष्णोः पदपद्मचिन्तनरताः** पादारविन्दस्मरणासक्ताः। **तत्कर्मनिष्ठाः** तस्य विष्णोः कर्मणि पूजारूपकर्मणि निष्ठाः आसक्ताः। ये जनाः। **तद्भक्तपरायणाः** विष्णुभक्ताश्रयाः। **ये शुभधियः** जनाः। **मां च** मामपि। **अनिशं**। **अर्चन्ति** विष्णुभक्तत्वेन पूजयन्ति। 'अर्च पूजायाम्' इति धातोर्लट्। **हे वसुधे** वसुन्धरे। **तदभिष्टं** तेषां पूर्वोक्तविष्णुपदचिन्तनादिगुणयुक्तानाम्। **अभीष्टं** मनोरथम्। **आशु** शीघ्रम्। **देहि** दिश। 'दिश अतिसर्जन' इति धातोर्लोट्। **इति एकान्ते** रहसि। प्रकाशतया कथने स्वस्य शैवमतप्रवर्तकत्वेन मूर्खाणां शैवमते प्रवृत्तिर्न स्यादिति भावः। **गां** भूमिम्। **बोधयन्** उपदिशन्। बुध ज्ञान इति धातोर्णिजन्ताच्छत्रादेशः। **श्रीगोकर्णकृतालयः** भूमेः कर्णस्थाने गोकर्णाख्यक्षेत्रे कृतावास इत्यर्थः। एकान्तोक्तेः कर्णप्रदेश एवोचितत्वादिति भावः। **गौरीधवः** पार्वतीपतिः। 'धवः प्रियः पतिर्भर्ता' इत्यमरः। **स देवः** शिवः **विजयते** उत्कृष्टो वर्तते। 'वि पूर्वाज्जि जय' इति धातोः [१]'विपराभ्यां जेः' इत्यात्मने पदे लट्। यथा कस्यचिदेकान्ते बोधयन् पुरुषः दूरे स्थित्वा बोध्यते चेत्, अन्येषां श्रवणं स्यादिति भीत्या कर्णसमीप एव स्थित्वा बोधयति तथैवैष महादेवोऽप्यन्येषामनधिकारिणां श्रवणं स्यादिति भयेन गोकर्णशब्दवाच्यायाः भूमेः कर्णसमीप एव कृतालयः सन्नुपदिशतीति भावः। **उत्प्रेक्षालङ्कारः** ॥ ८० ॥

**गोकर्णभासिताङ्गः प्रत्युपकुर्वन्निवाम्बिकारमणः।**
**गोकर्णसञ्ज्ञमधुना भासयति क्षेत्रमम्बुधेस्तीरे ॥ ८१ ॥**

**गोकर्णेति**। **गोकर्णभासिताङ्गः** गौः नेत्रमेवश्रवणं येषां ते गोकर्णाः सर्पाः।

'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले।
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः ............ ॥' इति।

---

१ पा.सू. (१/३/१९)

कर्णशब्दग्रहौ श्रोत्रमिति च । 'कुण्डली गूढपाच्चक्षुश्रवाः काकोदरः फणी'ति चामरः । तैर्भासितान्यङ्गानि यस्य स तथोक्तः । सर्पाभरणत्वादिति भावः । **अम्बिकारमणः** पार्वतीपतिः रुद्रः । 'अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका' इत्यमरः । **अधुना प्रत्युपकुर्वन्निव** गोकर्णतो भासनलक्षणमुपकारं प्राप्तः स्वयं च तद्गोकर्णस्य भासनलक्षणं प्रत्युपकारं कुर्वन्निव । **अम्बुधेः** समुद्रस्य । **तीरे गोकर्णसञ्ज्ञं** गोकर्ण इति सञ्ज्ञा यस्य तत् । **क्षेत्रं भासयति** प्रकाशयति । भास दीप्तावित्यस्माद्धातोर्णिजन्ताल्लट् । गोकर्ण-भासितः स्वयमपि गोकर्णं भासयतीति **श्लेषाज्जीवितेयमुत्प्रेक्षा । आर्यावृत्तमिदं पद्यम्** ॥ ८१ ॥

**पूर्णेन्दुवर्ण गोकर्णाकार मारभयंकर ।**
**भवाय भव मे देव भवानीप्रिय शङ्कर ॥ ८२ ॥**

तमेव वर्णयति – **पूर्णेन्दुतिरिति । पूर्णेन्दुवर्ण** पूर्णेन्दुरिव वर्णो यस्य स तथा तस्य सम्बुद्धिः । **गोकर्णाकार** गोः धेनोः कर्णवदाकारो यस्य तस्य सम्बुद्धिः । **मारभयङ्कर** मारस्य मन्मथस्य भयङ्करः तस्य सम्बुद्धिः । **भवानीप्रिय** भवान्याः पार्वत्याः प्रिय । **हे शङ्कर । देव** त्वम् । **मे भवाय** मङ्गलाय । **भव** । 'भू सत्तायाम्' इति धातोर्लोट् ॥ ८२ ॥

गोकर्णस्थो विघ्नेश्वरः

**दुष्टानां विघ्नकर्ता सुचरितसुजनस्तोमविघ्नापहर्ता**
**तस्माद्विघ्नाधिपोऽहं मत इति सुधियां स्पष्टमाज्ञापनाय ।**
**पौलस्त्येच्छान्तरायः सुरमुनिनिकराभीष्टसम्प्राप्त्युपायः**
**श्रेयो विघ्नाधिराजः प्रदिशतु सततं भूरि गौरीतनूजः ॥ ८३ ॥**

---

* रौप्यपीठं कुमाराद्रिः कुम्भासिश्च ध्वजेश्वरः ।
क्रोडगोकर्णमूकाम्बाः सप्तैते मोक्षदायकाः ॥ - पुराणवचनम् ।

अथ तत्समीपस्थं *विघ्नेश्वरं वर्णयति – **दुष्टानामिति** । (यतः) **अहं दुष्टानां** दुर्जनानां **विघ्नकर्ता** तन्मनोरथहन्तेत्यर्थः । नित्यसापेक्षत्वात् समासः । [१]तृजकाभ्यां कर्तरीति षष्ठीसमासनिषेधाच्छेषषष्ठ्या समासो बोध्यः । **सुचरितसुजनस्तोमविघ्नापहर्ता** शोभनं चरितं येषां ते सुचरिताः पुण्यकर्माणः ते च सुजनाश्च । तेषां स्तोमः समूहः । तस्य विघ्नापहर्ता । सुजनेष्टान्तरायपरिहर्तेत्यर्थः । **तस्माद्विघ्नाधिपः** विघ्नेश इति । **मत्तः** प्रसिद्धः। यो यत् स्वेच्छयैव ददाति स्वेच्छयैव न ददाति च स तदधिपः । अहं च स्वेच्छयैव विघ्नान् ददामि न ददामि च । अतश्च विघ्नाधिप इति भावः । **इति सुधियां** ज्ञानिनाम् । [२]'न भूसुधियो'रिति यण्निषेधः । सुधीः कोविदो बुध इत्यमरः । **स्पष्टं** यथा भवति तथा । **आज्ञापनाय** सम्यक् प्रदर्शनाय । **पौलस्त्येच्छान्तरायः** पौलस्त्यस्य पुलस्त्यकुलोत्पन्नस्य रावणस्य इच्छायाः ईश्वरदत्तलिङ्गं स्वपुरं प्रति नेष्यामीत्येवं रूपायाः इच्छायाः अन्तरायो विघ्नो यस्मात् स तथोक्तः । **सुरमुनिनिकराभीष्टसम्प्राप्त्युपायः** सुराश्च मुनयश्च सुरमुनयः तेषां निकरस्य समूहस्य यदभीष्टं तस्य सम्प्राप्तौ उपायस्थानीभूतः । एतादृशः **गौरीतनूजः** पार्वतीपुत्रः । **विघ्नाधिराजः** अधिकश्चासौ राजा च अधिराजः । विघ्नानामधिराजा । [३]राजाहःसखिभ्यष्टच् । **भूरि** बहु । **श्रेयः** पुण्यम् । **सततं प्रदिशतु** दद्यात् । 'दिश अतिसर्जन' इति धातोर्लोट् । **पुराकिल** रावणतपसा प्रसन्नः शिवः स्वसन्निधानयुक्तलिङ्गं दत्वा एतल्लिङ्गं यावत्कालपर्यन्तं भवद्गृहे तिष्ठति तावत्कालपर्यन्तं त्वां न कोऽपि जेष्यति।

---

* करस्थबीजपूराक्तशुण्डादण्डपिचण्डिल।
विघ्नाधिराज हस्तीन्द्रमस्तकायास्तु ते नमः ॥
हेरम्ब कुम्भलसितामलकुङ्कुमाङ्क
मारारिपुत्र करिवक्त्र पवित्रगात्र ।
कारुण्यरूप सुकलाप महाप्रताप
प्रारब्धकार्यमुरुधैर्य भवेदविघ्नम् ॥
– इति च श्रीवादिराजतीर्थकृतसरसभारतीविलासस्थगणेशस्तुतिः (२/४२,४३)

१. 'तृजकाभ्यां कर्तरि' – पा.सू. (२/२/१५)

२. 'न भूसुधियोः' – पा.सू. (६/४/८५)

३. 'राजाहःसखिभ्यष्टच्' – पा.सू. (५/४/९१)

लिङ्गं तु त्वया मार्गे न स्थापनीयम् । स्थापितं चेत् पुनर्नेतुं न शक्यमित्युक्त्वा दत्तवान् । रावणोऽपि लिङ्गं गृहीत्वा गच्छन् गोकर्णे मूत्रपीडितः सन् विघ्नेश्वरहस्ते तल्लिङ्गं दत्वा मूत्रोत्सर्जनार्थं गतः । ततो भविष्यद्देवताकार्यं विजानता विघ्नेश्वरेण हस्तगतं लिङ्गं भूमौ निक्षिप्तमिति **पौराणिककथा**प्रमाणकोऽयं श्लोकार्थः ।। ८३ ।।

**कोल्हापुरस्थ महालक्ष्मीः**

**अमानवनजस्थानसरसीकुलसङ्कुले ।**
**रमा कोल्हापुरक्षेत्रे वसतीति किमद्भुतम् ।। ८४ ।।**

कोल्हा(ह्ला)पुरस्थं लक्ष्मीं वर्णयति – **अमानेति** । **अमानवनजस्थानसरसीकुलसङ्कुले** न विद्यते मानं मितिर्येषां तानि अमानानि । अपरिमितानीत्यर्थः । वनजानि कमलानि तेषां स्थानानि आवासभूतानि । सरसीकुलानि सरोवरसमूहाः । तैः सङ्कुले सङ्कीर्णे । **कोल्हापुरक्षेत्रे रमा** लक्ष्मीः । **वसतीति किमद्भुतं** किमाश्चर्यम् । कमलायाः कमलवति स्थले निवासस्यानाश्चर्यतमत्वादिति भावः ।। ८४ ।।

**ध्याताऽऽध्यातान्तशान्तप्रियजनविभवायान्वहं या हृदन्तः**
**ख्याताख्या तादृशाभ्युन्नतिवितरणशक्त्यालया या पयोब्धेः ।**
**जाताऽजातादिदेवव्रजमनुजततेः श्रेयसे भूयसे सा**
**माता मातापसाराधितपदकमलाऽधोक्षजप्रेयसी स्यात् ।। ८५ ।।**

तामेव वर्णयति – **ध्यातेति** । **आध्यातान्तशान्तप्रियजनविभवाय** आधिर्मानसी व्यथा । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । तेन आतान्ताः सन्तप्ताः । शान्ताः ज्ञानिनः शान्तियुक्ता वा । प्रियजनाः भक्तजनाः । तेषां विभवाय सम्पदे । **या हृदन्तः** हृन्मध्ये । **अन्वहं** प्रतिदिनम् । **ध्याता** । **ख्याताख्या** ख्याता प्रसिद्धा आख्या लक्ष्मीः श्रीर्भूर्मङ्गलदेवतेत्यादिरूपा अभिधा यस्याः सा तथोक्ता । अत एव **या तादृशाभ्युन्नतिवितरणशक्त्यालया** तादृशाभ्युन्नतिः । स्वनामसदृशाभिवृद्धिः । तस्याः वितरणशक्तिः

प्रतिपादनसामर्थ्यम् । तस्याः आलया । स्वनामसदृशैश्वर्यप्रदेत्यर्थः । **या पयोब्धेः** क्षीरसमुद्रात् । **जाता** । **या अजातादिदेवव्रजमनुजततेः** अः परमात्मा तस्माज्जायत इति अजातः चतुर्मुखः । स एव आदिर्येषां ते तेषां व्रजः समूहः । तेन सहिता मनुजततिः मनुष्यसमूहः । शाकपार्थिवादिवत् समासः । तस्याः । **माता** देवमनुष्यादिसकल-लोकमातेत्यर्थः । 'इन्दिरा लोकमाता मा' इत्यमरोक्तेः । **या तापसाराधितपदकमला** तापसैः तपस्विभिः । ज्ञानिभिर्ब्रह्मादिभिर्वा । आराधितं पदकमलं पादपद्मं यस्याः सा तथोक्ता । **या अधोक्षजप्रेयसी** अधोक्षजस्य नारायणस्य । प्रेयसी प्रियतमा । **तापसाराधितपदकमलाधोक्षजप्रेयसी**त्येकं पदं वा । **सा मा** महालक्ष्मीः । **भूयसे** बहुतराय **श्रेयसे** सम्पदे **स्यात्** भूयांसि श्रेयांसि दद्यादिति भावः । **यमकालङ्कारः** । [१]यमकालङ्कारलक्षणं तु रुग्मीणीशविजयव्याख्याने विवृत्तमस्माभिः ।। ८५ ।।

तापा(नदी)

**कथं तापाभिधा तेऽम्ब तापघ्न्या इति संशयः ।**
**अघतापप्रदायिन्यास्तव सन्दर्शनाद्गतः ।। ८६ ।।**

तापाख्यां नदीं वर्णयति – **कथमिति हे तेऽम्ब** मातः । [२]'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वः । अम्बा सवित्री जननी च मातेति हलः । **तापघ्न्याः** स्नानपानादिना सन्ताप-हर्त्र्याः । **ते** तव । **तापाभिधा** तापेति नाम । **कथं** घटते । **इति संशयः** । तापेति

---

[१] यमकलक्षणं तु दण्डिनोक्तम् –

'अव्यपेतव्यपेतात्मा व्याहृतिर्वर्णसंहतेः ।
यमकं तच्च पादानामादिमध्यान्तगोचरम् ।
एकद्वित्रिचतुष्पादयमकानां विकल्पना ।
आदिमध्यांतमध्यान्तमध्याद्याद्यन्तसर्वतः ।
अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः ।
सुकरा दुष्कराश्चैव वर्ण्यन्ते तत्र केचन''।। इति ।

– इति च रुग्मिणीशविजयव्याख्याने (४/५३)

[२] 'अम्बार्थनद्योर्ह्रस्वः' – पा.सू. (७/३/१०७)

लोकप्रसिद्धः सन्तापहर्तृत्वं च सन्देहबीजमिति भावः । **अघतापप्रदायिन्याः** अघानां पापानां तापप्रदायिन्याः । **तव सन्दर्शनात्** निरीक्षणात् । **गतः** नष्टः । अस्मत्सन्ताप-हर्त्र्या अपि पापसन्तापहेतुत्वात् तापेत्यभिधानं घटत इति निश्चीयत इति भावः । दर्शनमात्रेण सकलपापहन्त्री तापानदीति तात्पर्यार्थः ॥ ८६ ॥

## नर्मदा(नदी)

**स्वावगाहनमात्रेण या स्वर्गवनिताजनैः ।**
**सह नर्मगिरां दात्री भजे तां नर्मदानदीम्[1] ॥ ८७ ॥**

नर्मदानदीं वर्णयति – **स्वावगाहनेति** । **या** नर्मदा । **स्वावगाहनमात्रेण** । **स्वर्गवनिताजनैः सह** स्वर्गस्थाप्सरोजनैः सह । **नर्मगिरां** विलासवचनानाम् । 'क्रीडा लीला च नर्म च' इत्यमरः । **दात्री** । कर्तृकर्मणोः[2] कृतीति षष्ठी । **तां नर्मदानदीं** अहं **भजे** ॥ ८७ ॥

---

१ गङ्गे च यमुने चैव गोदावरि सरस्वति ।
**नर्मदे** सिन्धु कावेरी जलेऽस्मिन् सन्निधिं कुरु ॥

त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ।
सरिद्वनानि शैलेन्द्रा देवाश्च सपितामहाः ॥
**नर्मदायां** कुरुश्रेष्ठ सह सिद्धर्षिचरणैः ।
स्नातुमायान्ति पुण्यौघैः सदा वारिषु भारत ॥ – इति भारते (३/८९/३-४)

सद्यः पुनाति गाङ्गेयं दर्शनादेव **नार्मदम्** । – इति पद्मपुराणे ।

**नर्मदा**तीरसञ्जाताः सरलार्जुनपादपाः ।
**नर्मदा**तोयसंस्पर्शात् ते यान्ति परमां गतिम् ।
**नर्मदायां** महाविष्णुं चतुर्बाहुं नृपोत्तम ॥ – इति स्मृतिमुक्तावल्युद्धृतब्रह्माण्डपुराणवचनम् ।

कालिन्द्यूना ततोऽधमा । **नर्मदा**सिन्धुसरितौ तत्समा .... ॥
–इति श्रीराघवेन्द्रतीर्थकृतनदीतारतम्यस्तोत्रे ।

२ 'कर्तृकर्मणोः कृति' – पा.सू. (२/३/६५)

### प्रभासः(क्षेत्रम्)

**सरस्वतीहिरण्याभ्यां सङ्गो यत्रापराम्बुधेः।**
**प्रभासाख्यं तदाभाति प्रभाऽऽस हि यतो भुवः ॥ ८८ ॥**

[१]प्रभासक्षेत्रं वर्णयति – **सरस्वतीति** । यत्र क्षेत्रे **अपराम्बुधेः** पश्चिमसमुद्रस्य । **सरस्वतीहिरण्याभ्यां** नदीभ्यां सह । **सङ्गः** सम्बन्धो जातः । **तत् प्रभासाख्यं** क्षेत्रम् । **आभाति** । 'भा दीप्तौ' इति धातोर्लट् । एतस्य प्रभासत्वं निर्वक्ति । **यतः** प्रभासक्षेत्रात् । **भुवः** भूमेः । **प्रभा** कान्तिः । **आस** बभूव **हि** । अत एतस्य क्षेत्रस्य प्रभासत्वमित्यर्थः । भूमेः शोभाजनकमिदं क्षेत्रमिति भावः । आसेति तिङन्तप्रतिरूपकमव्ययम् । अन्यथा [२]अस्तेर्भूरिति भ्वादेशे बभूवेति स्यात् ॥ ८८ ॥

### प्रभासस्था बाणगङ्गा

**बाणप्रयोगसञ्जाता बाणगङ्गा विभाति सा ।**
**स्वच्छा स्मरदघच्छेत्री कृष्णकीर्तिरिवोन्मुखी ॥ ८९ ॥**

बाणगङ्गां वर्णयति – **बाणेति** । या नदी । **बाणप्रयोगसञ्जाता** बाणप्रयोगेण श्रीकृष्णकृतबाणप्रयोगेण सञ्जाता समुत्पन्ना । **स्वच्छा** निर्मला । **स्मरदघच्छेत्री** स्मरतां अघच्छेत्री तापपरिहर्त्री । **उन्मुखी** ऊर्ध्वमुखी भूमिं निर्भिद्योर्ध्वं गच्छन्तीत्यर्थः । **सा बाणगङ्गा** । **कृष्णकीर्तिरिव विभाति** । कीर्तिरपि शत्रुषु बाणप्रयोगेण सञ्जायते । स्वच्छेत्यादिविशेषणानि कीर्तिपक्षेऽपि योज्यानि ॥ ८९ ॥

### द्वारकाक्षेत्रम्

**विश्वम्भरां घनतरामपि भूरियत्नैर्निर्भिद्य यत्पदमुपेत्य बलीन्द्रगेहात्।**
**आस्ते त्रिविक्रमतनुर्हरिरद्वितीया सा द्वारकेप्सितपुमर्थकरी पुरी नः॥९०॥**

---

१ एवं तु तीर्थप्रवरं पृथिव्यां प्रभासनात् तस्य ततः प्रभासः ॥ – इति महाभारते(शल्य. ३५/४२)

२ 'अस्तेर्भूः' – पा.सू. (२/४/५२)

*द्वारकां वर्णयति – **विश्वम्भरमिति** । **त्रिविक्रमतनुः** त्रिविक्रममूर्तिः । **हरिः** । **घनतरामपि** अत्यन्तनिबिडामपि । **विश्वम्भरां** भूमिम् । 'कुः पृथ्वी पृथिवी स्थिरा च

---

* अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी **द्वारवती** चैव सप्तैता मोक्षदायिकाः ॥

इहाखिलैश्वर्यसुभोगवृद्धेः परत्र निःश्रेयससौख्यसिद्धेः ।
महःपरं द्वारमवाप्य पृथ्व्यामसौ पुरी **द्वारवती** बभूव ॥
यतोऽभितोऽच्छस्फटिकावदातलसत्कवाटान्तरिताऽपि सेयम् ।
पुरी नृणां **द्वारवतीव** भाति ततोऽपि तां द्वारवतीं वदन्ति ॥
यतः कवाटे विवृतेऽपि सेयं पुरी कवाटान्तरितेव भाति ।
हरिन्मणीनां प्रभया महत्या कथं नु सा **द्वारावतीति** मन्ये ॥
यदीयरत्नावृतहैमवप्रसकाशमभ्येत्य निवर्तते स्म ।
समुद्यताऽऽसीत् प्रतिबिम्बराशीन्निरीक्ष्य दीना बहुशोऽरिसेना ॥
मुक्तावलीराजितसर्वगेहा नित्यं प्रमोदाशनसत्समूहा ।
दुष्टैरगम्या दयिता मुरारेर्मुक्तिप्रभा **द्वारवती** पुरी सा ॥
विचित्ररत्नावृतवप्रसौधगृहाङ्गणागोपुरवापिकौघम् ।
इदं पुरीरत्नमवाप्य नूनं बभूव रत्नाकरशब्दितोऽब्धिः ।

– रुग्मिणीशविजये(१७/२६ -६८)

निर्याते तु जले तस्मिन् सागरो मकरालयः ।
**द्वारकां** रत्नसम्पूर्णां जलेनाप्लावयत् तदा ॥
यद्यद्धि पुरुषव्याघ्रो भूमेस्तस्या व्यमुञ्चत ।
तत्तत् सम्प्लावयामास सलिलेन स सागरः ॥ – महाभारते (१६/७/४१,४२)

**द्वारकायां** च न स्थेयं भवद्भिश्च स्वबन्धुभिः ।
मया त्यक्तं यदुपुरीं समुद्रः प्लावयिष्यति ॥ – भागवते (११/३०/४७)

**द्वारकां** हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् ।
वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ – भागवते(११/३१/२३)

महोदकस्य मध्यतश्चकार तां पुरीं शुभाम् ।
द्विषट्कयोजनायतां पयोब्धिमध्यगोपमाम् ॥ – म.भा.ता.नि.(१७/११३)

... विनिर्ययौ **द्वारवत्यास्तां** जग्राह च सागरः । – म.भा.ता.नि.(३२/४२)

धरिणी विश्वम्भरा मेदिनी' इति हलायुधः । **भूरियत्नैः** मुसलप्रहारादिबहुलप्रयत्नैः । **निर्भिद्य** भित्वा । **बलीन्द्रगेहात्** महाबलिगृहात् । **यत्पदं** यस्यां द्वारकायां पदं स्थानम् । **उपेत्य आस्ते** । महाबलेः प्रसन्नस्तद्द्वारिस्थितः त्रिविक्रमः कुशासुरवधार्थमृषिभिर्याचितः सन् मुसलेनावनिं निर्भिद्य द्वारकामुपेत्य कुशासुरं हत्वा तत्रैवास्त इति **पौराणिकी प्रसिद्धिः** । अत एव **अद्वितीया** असदृशी । **सा द्वारका** नाम । **पुरी** । **नः** अस्माकम् । **ईप्सितपुमर्थकरी** अभीप्सितपुरुषार्थकरी भवेत् । 'कृञो हेतुताच्छील्यानुलोम्येष्विति[1] ट प्रत्ययः । टिड्ढाणञित्यादिना[2] ङीप् । अतस्तत्र बहुतरतपश्चरणादिना हयग्रीवप्रसादः स्वात्मना लब्ध इति भावः ॥ ९० ॥

### द्वारकास्थः त्रिविक्रमः

**त्रिविक्रमो विजयते त्रयीविख्यातविक्रमः ।**
**यः कुशं दमयित्वेमां चक्रे विप्रकुशस्थलीम् ॥ ९१ ॥**

त्रिविक्रमं वर्णयति – **त्रिविक्रम** इति । **त्रयीविख्यातविक्रमः** त्रय्या वेदत्रयेण । सङ्ख्याया अवयवे तयप्[3] । द्वित्रिभ्यां तयस्यायज्वा[4] इति अयजादेशे टिड्ढाणञिति ङीप् ।

---

इति सम्मन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ।
अन्तः समुद्रे नगरं कृत्वाऽद्भुतमचीकरत् ॥ – भागवते

पुण्या द्वारावती तत्र यत्रास्ते मधुसूदनः ।
साक्षाद्देवः पुराणोऽसौ स हि धर्मः सनातनः ॥ – महाभारत(३/८०/२४)

पांसवो द्वारकाया वै वायुना समुदीरिताः ।
पापिनां मुक्तिदाः प्रोक्ताः किं पुनर्द्वारका भुवि ॥ – स्कन्दपुराणे प्रभासखण्डे

१ कृञो हेतुताच्छील्यानुलोम्येषु । – पा.सू. (३/२/२०)

२ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः । – पा.सू. (४/११/५)

३ सङ्ख्याया अवयवे तयप् । – पा.सू. (५/२/४२)

४ द्वित्रिभ्यां तयस्यायज्वा । – पा.सू. (५/२/४३)

स्त्रियामृक्साम यजुषी इति 'वेदास्त्रयस्त्रयी' इत्यमरः। विख्यातः विशेषेण कथितः विक्रमः पराक्रमो यस्य स तथोक्तः। अनेन त्रिषु[१] विक्रमो यस्येति। त्रिविक्रमशब्दस्यार्थान्तरमुक्तं भवति। वेदत्रयप्रतिपाद्य इत्यर्थः। **त्रिविक्रमः** त्रिविक्रमरूपी हरिः। **विजयते** उत्कृष्टो वर्तते। तमेव विक्रमं दर्शयति। **य इति**। **यः** त्रिविक्रमः। **कुशं** कुशासुरम्। **दमयित्वा** हत्वा। **इमां** कुशासुराधिष्ठितस्थलीम्। **विप्रकुशस्थलीं** ब्राह्मणोचितसत्क्रियासाधनदर्भ-स्थलीं **चक्रे**। इति **चातुर्योक्तिः** ॥ ९१ ॥

**सगदोऽपि ह्यसौ देवः संसारे ह्यगदतामगात्।**
**त्रिविक्रमोऽप्यसौ योगिमनसोऽविक्रमोऽभवत् ॥ ९२ ॥**

**सगद** इति। **असौ देवः** त्रिविक्रमः। **सगदोऽपि** गदया कौमोदक्या सहितोऽपि। **संसारे** भक्तजनसंसारे रोगे। **अगदतां** औषधत्वम्। भेषजौषधभैषज्यान्यगदो जायुरित्यपीत्यमरः। **अगात्**। सगदस्यागदत्वमापाततो विरुद्धम्। अगदशब्दस्यौषधा-र्थत्वेन विरोधपरिहारः। अत एव **विरोधाभासालङ्कारः**। **असौ त्रिविक्रमोऽपि** त्रिषु लोकेषु विक्रमः पादविन्यासो यस्य। त्रयो विक्रमाः पादविक्षेपा यस्येति वा। तथोक्तोऽपि। **योगिमनसः** ध्यानासक्तमुनीन्द्रचित्तात्। **अविक्रमः** न विद्यते विक्रमः एकोऽपि पादविक्षेपो यस्य स तथोक्तः। **अभवत्**। योगिमनो विहाय पदमात्रमपि गन्तुं न समर्थो जात इत्यर्थः। सदा योगिमनोगोचरोऽभवदिति भावः। त्रिविक्रमस्या-विक्रमत्वमापाततो विरुद्धम्। तात्पर्यार्थमादाय विरोधपरिहारः ॥ ९२ ॥

### गोमतीनदी

**श्रीकृष्णचरणाम्भोजरजोरञ्जितगोमतीम्।**
**गोमतीमब्धिरमणीं भजे तापत्रयापहाम् ॥ ९३ ॥**

---

१ नित्यं पद्मगदारिशङ्खसहितश्चित्ते मम त्रिक्रमो ....
– इति श्रीवादिराजश्रीचरणविरचिते चतुर्विंशतिमूर्तिभेदस्तोत्रे।

तत्र *गोमतीं वर्णयति – **श्रीकृष्णेति**। **श्रीकृष्णचरणाम्भोजरजोरञ्जितगोमतीं** श्रीकृष्णस्य चरणौ अम्भोजे इवेत्युपमितसमासः। श्रीकृष्णचरणाम्भोजस्य। रजोभिः परागैः। रञ्जिता अलङ्कृता गौर्जलमस्यास्तीति तथोक्ता ताम्। अनेनासाधरण्येन व्यपदेशा भवन्तीति गोमतीशब्दस्य निर्वचनम्। 'गौः स्वर्गे वृषभे वज्रे रश्मौ चन्द्रमसि स्मृतः। अर्जुने नेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इति विश्वः। [1]तदस्यास्तीत्यादिना मतुप्। [2]उगितश्चेति ङीप्। **तापत्रयापहां** तापत्रयं अध्यात्मिकादित्रिविधतापं अपहन्तीति तापत्रयापहा ताम्। अशिह्नेतिडप्रत्ययः। **अब्धिरमणीं** समुद्रपत्नीम्। **गोमतीं** नदीमहं **भजे**॥ ९३॥

**फुल्लफेनसिताम्भोधिकल्लोलधृतया तया।**
**वल्लभालिङ्गनसुखं दुर्लभं लभ्यतेऽनिशम्** ॥ ९४॥

**फुल्लेति**। **फुल्लफेनसिताम्भोधिकल्लोलधृतया** फुल्लैः विकसितैः फेनैः सिताः अम्भोधिकल्लोलाः समुद्रोर्मयः। ऊर्मिरुत्कलिकालोलकल्लोललहरीस्तथेति हलः। तैर्धृतया अलिङ्गितया। **तया** गोमत्या। **दुर्लभं** असुलभम्। नित्यं भर्त्रालिङ्गनस्य दुर्लभत्वादिति भावः। **वल्लभालिङ्गनसुखं** वल्लभालिङ्गनाज्जातं सुखम्। **अनिशं** अनवरतम्। **लभ्यते**। अनेन नायकस्य अनुकूलत्वं नायिकायाः स्वाधीनपतिकात्वं च द्योत्यते॥ ९४॥

**द्वारकास्थं चक्रतीर्थम्**

**चक्रतीर्थस्य महिमा वर्णितुं केन शक्यते।**
**यच्छिलामपि सङ्गेन विधत्ते विश्ववन्दिताम्** ॥ ९५॥

तत्र चक्रतीर्थं वर्णयति – **चक्रेति**। **चक्रतीर्थस्य महिमा** सामर्थ्यम्। **केन** कविना। **वर्णितुं** स्तोतुम्। **शक्यते** न केनापीत्यर्थः। **यत्** चक्रतीर्थं। **सङ्गेन**

---

* ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा।
अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ॥ – गीताभाष्योद्धृतब्रह्मपुराणवचनम्

[1] तदस्यास्त्यस्मिन्निति मतुप् – पा.सू.(५/२/९४) [2] उगितश्च – पा.सू.(४/१/६)

स्वसम्बन्धेन शिलामपि ज्ञानादिगुणशून्यपाषाणमपि । **विश्ववन्दिताम्** विश्वैः समस्त-जनैरपि वन्दितां नमस्कृताम् । **विधत्ते** कुरुते । चक्रतीर्थे पतिताः शिला अपि चक्राङ्का भूत्वा शालग्रामवद्वन्दिता भवन्तीति **सर्वजनप्रसिद्धिः**[1] । जडस्याप्येतादृश-महत्त्वसम्पादकस्य चक्रतीर्थस्य महिमातिशयः कथं कथनीय इति भावः ।। ९५ ।।

## शङ्खोद्धारक्षेत्रम्

**पापेनापि समावृतस्य विमलज्ञानोज्झितस्याप्यलं**
**मग्नस्यापि भवांबुधाविह भवेत् पूतस्य जात्योद्धृतिः ।**
**इत्याख्यापयितुं दरं मुरहरो यत्रोद्दधारादरात्**
**शङ्खोद्धारपदं विभाति तदिदं क्षेत्रं पवित्रं भुवि ।। ९६ ।।**

शङ्खोद्धारक्षेत्रं वर्णयति – **पापेनेति** । **पापेन** दुष्कृतेन । **समावृतस्यापि** छन्नस्यापि । **विमलज्ञानोज्झितस्यापि** निर्मलज्ञानशून्यस्यापीत्यर्थः । **अलं** अत्यर्थम् । **भवाम्बुधौ** संसारसमुद्रे । **मग्नस्यापि** जात्या स्वभावेन । **पूतस्य** शुद्धजीवस्येत्यर्थः । **इह** संसारात् । [2]**उद्धृतिः** उद्धारः । 'धृङ् धारण' इति धातोः क्तिन् । **भवेत्** स्यादेव । **मुरहरः** श्रीकृष्णः । **इत्याख्यापयितुं** इममर्थं ज्ञापयितुमिव । **आदरात् यत्र** क्षेत्रे । **दरं** शङ्खम् । **उद्दधार** उद्धृतवान् । धृङो लिट्। शङ्खोऽपि पापिष्ठेनासुरेण पञ्चजनेनावृतः । जडत्वा-ज्ज्ञानशून्यः समुद्रे मग्नः जात्या पूतः शुभ्रः । एतादृशशङ्खोद्धारेणैतादृशजीवस्याप्युद्धारो

---

१ शालग्रामोद्भवो देवो शिला चक्राङ्कमण्डिता ।
यत्रापि नीयते तत्र वाराणस्याः शताधिकम् ।।
शालग्रामोद्भवो देवो देवो द्वारवतीभवः ।
उभयोः सङ्गमो यत्र तत्र मुक्तिर्न संशयः।। –इति कृष्णामृतमहार्णवे(१०४,१०५)

२ अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ।।
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।। – गीता (९/३०,३१)

- देवदेवांशादिष्वेव चैतद्भवति । – इति गीताभाष्ये (९/३०,३१) ।

भवेदित्ययमर्थो ज्ञापितो भवतीति भावः । **तदिदं पवित्रं शङ्खोद्धारपदं** शङ्खोद्धार इति पदं नाम यस्य तत् । **क्षेत्रं भुवि विभाति** शोभते ॥ ९६ ॥

## गोपीचन्दनम्*

**फाले यल्लिखितं धुनोति विविधां लेखां विधात्रा कृतां**
**लीलार्थं तिलकीकृतं वितनुते विद्वल्ललामायितान् ।**
**ऊर्ध्वं यद्धृतमुच्चलोकपदवीसोपानमन्वेति तद्**
**गोपीचन्दनमञ्जसा विजयते तापत्रयध्वंसनम् ॥ ९७ ॥**

गोपीचन्दनं वर्णयति – **फाल** इति । **यत्** गोपीचन्दनं **फाले** ललाटे । 'ललाटं निटिलं फालम्' इति विश्वः । **लिखितं** सत् **विधात्रा कृतां** लिखिताम् **विविधां** जननमरणस्वर्गनरकादिसम्पादिकाम् । **रेखां** लिपिम् । **धुनोति** मार्ष्टि पुनः संसारिणं न करोतीति भावः । **यत्** गोपीचन्दनम् । **लीलातिलकीकृतं** लीलार्थं शृङ्गारार्थम् । तिलकीकृतं विशेषीकृतं सत् । 'तमालपत्रं तिलकं चित्रकं तु विशेषकम् । पुण्ड्रम्' इति हलः । अभूततद्भाव[1] इत्यादिना च्विप्रत्यये सति गतिसञ्ज्ञायां कुगतिप्रादय[2] इति समासः । **विद्वल्ललामायितान्** विद्वच्छ्रेष्ठानित्यर्थः । ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्य-

---

* ऊर्ध्वपुण्ड्रमृजुं सौम्यं ललाटे यस्य दृश्यते ।
स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः ॥
अशुचिर्वाऽप्यनाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यंमूर्ध्वपुण्ड्राङ्कितो नरः ॥
ऊर्ध्वपुण्ड्रविहीनस्य श्मशानसदृशं मुखम् ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ॥
यज्ञो दानं तपश्चैव स्वाध्यायः पितृतर्पणम् ।
व्यर्थं भवति तत्सर्वंमूर्ध्वपुण्ड्रं विना कृतम् ॥
गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा ।
तं तं शुद्धं विजानीयान्नात्र कार्या विचारणा ॥ – इति कृष्णामृतमहार्णवे (२२१, २२५)

१ अभूततद्भावे इति वक्तव्यम् (वार्तिकः – ५/४/५०)

२ कुगतिपादयः (पा.सू. २/२/१८)

केतुष्वित्यमरः । **वितनुते** करोति । **यत्** गोपीचन्दनं **ऊर्ध्वंधृतं** ऊर्ध्वपुण्ड्रीकृतं सत् । **उच्चलोकपदवीसोपानं** उच्चलोको वैकुण्ठलोकः तत्पदवी मार्गः । अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिरित्यमरः । अयनं पदवी मार्गः पन्था सरणी निगद्यत इति हलः । तत्र सोपानमुन्नतप्रदेशारोहणाय रचितशिलाभङ्गीपरं परम् । **अन्वेति** अनुकरोति वैकुण्ठं प्रापयतीत्यर्थः । **तत्तापत्रयध्वंसनं** आध्यात्मिकादित्रिविधतापस्य ध्वंसनं नाशो यस्मात् तत् । **गोपीचन्दनं** द्वारवत्युद्भवो मृद्विशेषः । **अञ्जसा विजयते** । 'द्वारवत्यां शुभे रम्ये वासुदेवहृदे यथा । तत्रोद्भवां मृदं शुभ्रमादाय द्विजसत्तमः । धारयेदूर्ध्वपुण्ड्राणि सर्वकामफलाप्तये । ऊर्ध्वपुण्ड्रधरो विप्रः सर्वलोकेऽपि पूजितः । सविमानं समारुह्य याति विष्णोः परं पदम्' इत्यादिवचनादुक्तोऽर्थो युक्त एव ॥ ९७ ॥

## सिद्धपुरी (कपिलाश्रमः)

**भाति [३]सिद्धपुरी यत्र सिद्धा मुक्तिपुरी नृणाम् ।**
**पुण्यं बिन्दुसरो यत्र बिन्दुमात्रं सरःसमम् ॥ ९८ ॥**

कपिलमुनेराश्रमं वर्णयति– **भातीति** । [४]**सिद्धपुरी भाति** शोभते । **यत्र** सिद्धपुर्यां **नृणां** मनुष्याणां । [५]नृ चेति नमामि वा दीर्घः । **मुक्तिपुरी** वैकुण्ठनगरी । **सिद्धा** सिद्धपुरीस्थजनानां मोक्षो निश्चित एवेत्यर्थः । अत एव सिद्धपुरीति संज्ञेति भावः । **यत्र बिन्दुसरः** बिन्दुसरोवरं च भाति । तत्र बिन्दुसरोवरे (अर्जितं) **बिन्दुमात्रं** अल्पमपि **पुण्यं** । **सरःसमं** सरोवरसदृशं (भवति) बहु भवतीत्यर्थः । अत एव बिन्दुसरो नामेति भावः ॥ ९८ ॥

---

३ तद्वीरासीत् पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ।
नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥
तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत् सरित् ।
स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता ॥ – भागवते (३/३३/३१, ३२)

४ अत्र 'सिद्धपुरीति द्वारकाया नामान्तरम्' इति मुद्रितपाठः । स तु बहुषु कोशेषु अदर्शनात्, प्रमाणविरुद्धत्वाच्च लिपिकृत्प्रमाद एव ।

५ पा.सू. (६/४/१४)

*

## पुष्करक्षेत्रम्

**तीर्थानामुत्तमं तीर्थं पुष्करं मर्त्यदुष्करम्।**
**विहरन्नपि वाराशौ वराहो यत्सरोऽविशत् ॥ ९९ ॥**

**॥ इति श्रीवादिराजश्रीचरणकृततीर्थप्रबन्धे प्रथम(पश्चिम)प्रबन्धः ॥ १ ॥**

पुष्करक्षेत्रं वर्णयति – **तीर्थानामिति** । मर्त्यदुष्करं मर्त्यैर्मनुष्यैर्दुष्करं कर्तुमशक्यं देवनिर्मितत्वादिति भावः । **पुष्करं** पुष्कराख्यं **तीर्थं** । **तीर्थानामुत्तमं** भवति । (कुतः) **वराहः** वराहरूपी हरिः । **वाराशौ** सकलतीर्थाधिपतौ समुद्रे । **विहरन्नपि** । **यत्** पुष्कराख्यं **सरः अविशत्** प्रविष्टवान् । विश प्रवेशन इति धातोर्लट् । अतः सकलतीर्थोत्तममिति भावः ॥ ९९ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिततीर्थप्रबन्धस्य टीकायां लक्ष्मीपतिभट्टोपाध्यायसूनुनारायणाचार्येण कृतायां गुरुभावप्रकाशिकायां पश्चिमप्रबन्धः ॥ १ ॥**

******

---

* कुरुक्षेत्रं गयां गङ्गां प्रभासं **पुष्कराणि** च ।
एतानि मनसा ध्यात्वा अवगाह्यं ततो जले ॥
दशकोटिसहस्राणि तीर्थानां वै महामते ।
सान्निध्यं **पुष्करे** येषां त्रिसन्ध्यं कुरुनन्दन ॥
जन्मप्रभृति यत् पापं स्त्रिया वा पुरुषेण वा ।
**पुष्करे** स्नातमात्रस्य सर्वमेव प्रणश्यति ।
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः ॥
तथैव **पुष्करं** राजन् तीर्थानामादिरुच्यते ।
दुष्करं **पुष्करे** गन्तुं दुष्करं पुष्करे तपः ।
दुष्करं **पुष्करे** दानं वस्तुं चैव सुदुष्करम् ॥
– इत्यादि श्रीमन्महाभारते वनपर्वणि (अ.८२, श्लो. २१,३३,३४, ३९)

स **पुष्करे**क्षणस्तदा सुरैर्नुतोऽथ पुष्करे ।
उवास तां निशां प्रभुः सयादवोऽमितप्रभः ॥ - म. भा. ता. नि. (१७/२७४)

# उत्तरप्रबन्धः

## कृष्णवेणी(नदी)*

**नमामि सुकृतश्रेणीं कृष्णवेणीं तरङ्गिणीम् ।**
**यद्वीक्षणं कोटिजन्मकृतदुष्कर्मशिक्षणम् ॥ १ ॥**

अमरभ्रमरैश्चार्च्यं कमलाकरपूजितम् ।
मन्दाकिनीजनिस्थानं वन्दे श्रीशपदाम्बुजम् ॥ १ ॥

श्रीवादिराजयोगीन्द्रसेवासन्तुष्टमानसः ।
श्रीवाजिवदनो देवो भावे तिष्ठतु मे सदा ॥ २ ॥

श्रीकृष्णवेणीं वर्णयति – **नमामीति** । **सुकृतश्रेणीं** सुकृतानां श्रेणी परम्परा यस्याः सा ताम् । **कृष्णवेणीं** कृष्णवेण्याख्याम् । **तरङ्गिणीं** तरङ्गाः अस्यां सन्तीति तरङ्गिणी नदी ताम् । [1]अत इति ठनाविति इन् प्रत्यये । [2]ऋन्नेभ्यो ङीप् इति ङीप् । 'तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी'त्यमरः । **नमामि** नौमि । **यद्वीक्षणं** यस्याः कृष्णवेण्याः वीक्षणं दर्शनम् । **कोटिजन्मकृतदुष्कर्मशिक्षणम्** कोटिजन्मसु कृतानां दुष्कर्मणां पापानां शिक्षणं यस्याः तथोक्ता । दर्शनमात्रेण अनेकजन्मार्जितपापं हरतीति भावः ॥ १ ॥

---

* विष्णुपादाब्जसम्भूता गङ्गा सर्वाधिका मता ।
ततो गोदावरी न्यूना कृष्णवेणी ततोऽधमा ॥ – इति श्रीराघवेन्द्रतीर्थविरचितनदीतारतम्यस्तोत्रे

कृष्णवेण्यां नृपश्रेष्ठ कृष्णः साक्षाज्जनार्दनः ।
चतुर्बाहुर्महातेजाः शङ्खचक्रासिशार्ङ्गधृक् ॥ – इति ब्रह्माण्डपुराणे ।

**कृष्णवेण्यर्घ्यमन्त्रः**

कृष्णे कृष्णाङ्गसम्भूते जन्तूनां पापहारिणि ।
नमस्ते सलिलश्रेष्ठे गृहाणार्घ्यं नमोऽस्तु ते ॥

१ अत इति ठनौ – पा.सू. (५/२/११५)

२ 'ऋन्नेभ्यो ङीप्' – पा.सू. (४/१/५)

**गुरुं कन्यागतं धन्या या पुरस्कृत्य सेव्यसे ।**
**श्रीकृष्णवेणि पापानि सा त्वं पुण्ययसि ध्रुवम् ॥ २ ॥**

**गुरुमितति** । **श्रीकृष्णवेणी** । **धन्या** सार्धत्रिकोटितीर्थोपेतभागीरथीसन्निधान-युक्तत्वात् कृतार्था । **या त्वम्** । **कन्यागतं** कन्याराशिस्थम् । कन्यागामिनमिति ध्वनिः । **गुरुं** बृहस्पतिम् । श्रेष्ठं गुरुमिति वा ध्वनिः । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरं' इति शब्दार्णवे । **पुरस्कृत्य** पुरोधाय । **सेव्यसे** । यतस्तैर्थिकजनैरिति शेषः । 'सेवृ सेवायाम्' इति धातोः कर्मणि लट् ।

'बृहस्पते सुराध्यक्ष सर्वलोकनमस्कृत ।
गृहाणार्घ्यं मया दत्तं कन्यास्थो भार्यया सह ॥'[१]

– इति वचनात् । कन्यागते गुरौ पूर्वमर्घ्यादिना बृहस्पतिपूजां कृत्वा पश्चात् कृष्णवेणीस्नानविधानादिति भावः । अतः **सा त्वं पापानि पुण्ययसि** सुकृतीकरोषि । **ध्रुवं** निश्चयः । 'त्यजेदन्त्यकुलोद्भूतां वृद्धां स्त्रीं कन्यकां तथा' इति वचनात् कन्या-गमनस्य निषिद्धत्वाद्गुरोरेतादृशानाचारस्य ज्ञानकृतत्वात् तादृशपापोपेतगुरोः पुरस्कर-णात् पापानां पुण्यत्वापादनसामर्थ्यं निश्चितमिति ध्वनिलभ्यो भावः ।

'त्यक्त्वा यस्त्वमयो याति रसस्पर्शात् सुवर्णताम् ।
एवं कृष्णाजलस्पर्शात् पापं सद्यो हि पुण्यताम् ॥'

– इति **स्मृत्यनुसारिणीयमुक्तिः** । अत्र नेयमुत्प्रेक्षा । अन्यथाकृतेरभावात् । केवलं शब्दशक्तिमूलो **ध्वनिरेव** ॥ २ ॥

**किं वर्णयामि हे कृष्णे त्वयि कृष्णस्य सन्निधिम् ।**
**यत् समस्तपदोक्तौ तु पुम्भावमवलम्बसे ॥ ३ ॥**

---

[१] बृहस्पत्यर्घ्यमन्त्रः

**किं वर्णयामीति** । हे **कृष्णे त्वयि कृष्णस्य** श्रीनारायणस्य । **सन्निधिं** सन्निधानम् । **किं वर्णयामि** कियत् कथयामि । **यत्** यस्मात् कारणात् । **समस्तपदोक्तौ तु** कृष्णया सहिता वेणीति पदयोः समासानन्तरं समस्तपदोच्चारणे । **पुम्भावं** पुल्लिङ्ग-कृष्णपदेनैव वाच्यत्वमित्यर्थः । **अवलम्बसे** आश्रयसे । कृष्णपादस्य पुंवद्भावे सति कृष्णवेणीति निगद्यसे इत्यर्थः । तस्मात् किं वर्णयामीति पूर्वेणान्वयः ।। ३ ।।

**श्रीकृष्णवेणि कल्याणि याचे त्वामहमन्वहम् ।**
**श्रीकृष्णचरणाम्भोजे भक्तिं भक्तभवच्छिदि ।। ४ ।।**

**श्रीकृष्णवेणीति** । हे **कल्याणि** परममङ्गलरूपे । **श्रीकृष्णवेणि त्वामहं अन्वहं** निरन्तरम् । **भक्तभवच्छिदि** भक्तानां भवः संसारः तद्भयमिति यावत् । तं छिनत्तीति भक्तभवच्छित् तस्मिन् । **श्रीकृष्णचरणाम्भोजे** श्रीकृष्णपादारविन्दे । **भक्तिं** माहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपां । **याचे** प्रार्थयामीति सम्बन्धः ।। ४ ।।

## पुण्डरीकक्षेत्रम्

**श्रीभीमरथ्यमलनीरसमीरवेगनिर्धूततीरगनराशुभघर्मजालम् ।**
**श्रीपाण्डुरङ्गलसितं वरपुण्डरीकक्षेत्रं पवित्रमहमन्वहमाश्रितोऽस्मि ।। ५ ।।**

पुण्डरीकक्षेत्रं वर्णयति – **श्रीभीमरथीति** । अहं **श्रीभीमरथ्यमलनीरसमीरवेग-निर्धूततीरगनराशुभघर्मजालम्** । श्रीभीमरथ्याः अमलं यन्नीरं उदकं तत्सङ्गी यः समीरः

---

* ताम्रपर्णी भीमरथी वञ्जुला च पिनाकिनी ।
पृथक् सागरगामिन्यो नद्यो **भीमरथीसमाः** ।। – इति श्रीराघवेन्द्रतीर्थविरचितनदीतारतम्यस्तोत्रे

**भीमरथ्यां** तु श्रीधरम् । – इति ब्रह्माण्डपुराणे ।

**वेणी भीमरथी** चैव नद्यौ पापभयावहे ।
मृगाद्विजसमाकीर्णे तापसालयभूषिते ।। – इति महाभारते (३/८/३)

भीमस्वेदसमुद्भूते रथनेमिविनिःसृते ।
सर्वपापप्रणाशार्थं स्नास्ये देवि तवाम्भसि ।। – इति भीमरथीस्नानमन्त्रः

वातस्तस्य वेगेन त्वरया निर्धूतानि तीरगानां तीरस्थानां नराणां पापाख्यघर्मजालानि येन स तथोक्तम् । **श्रीपाण्डुरङ्गलसितं** श्रीपाण्डुरङ्गविट्ठलेन शोभितम् । **पवित्रं** शुद्धम् । **वरपुण्डरीकक्षेत्रं** वरस्योत्तमस्य पुण्डरीकाख्यस्य मुनेः क्षेत्रं आश्रमम् । **अहमन्वहं** निरन्तरम् । **आश्रितोऽस्मि** ।। ५ ।।

### पुण्डरीकक्षेत्रस्थो श्रीविट्ठलः

**तीरे सत्सरितस्तिरस्कृतधनासक्तिर्विरक्तिप्रियः**
**पादाम्भोजमिदं मदङ्कसहितः सञ्चिन्तयान्तर्हृदि ।**
**पश्चात् ते कटिमात्र एव भविता संसारवार्धिर्न चेत्**
**शिक्षामीति हि लक्षयत्यनुदिनं स्वावस्थया विट्ठलः ।। ६ ।।**

[१]श्रीविट्ठलं वर्णयति – **तीर** इति । **सत्सरितः** पुण्यनद्याः **तीरे** स्थित इति शेषः । **तिरस्कृतधनासक्तिः** तिरस्कृता धनासक्तिः द्रव्यतृष्णा यस्य स तथोक्तः सन् । **विरक्तिप्रियः** वैराग्योपेतः सन् । **मदङ्कसहितः** मदङ्कैः शङ्खादिचिह्नैः सहितः अङ्कितः सन् । **अन्तर्हृदि इदं** मम **पदाम्भोजं** पादारविन्दं **सञ्चिन्तय** सम्यक् स्मर । 'चिति संस्मृत्याम्' इति धातोर्लोट् । **पश्चात्** स्मरणानन्तरम् । **ते** तव । **संसारवार्धिः** संसारसमुद्रः । **कटिमात्र एव** कटिप्रमाण एव । [२]प्रमाणे द्वयसजूद्घ्नञ्मात्रचः इति मात्रच् प्रत्ययः ।

---

१ विदा ज्ञानेन ठान् शून्यान् लाति गृह्णाति यः स्वयम् ।
अज्ञानुग्रहकृद्देवो विठलः कथ्यते बुधैः ।।
– इति प्रक्रियाकौमुदीव्याख्यायां (प्रकाशे) उद्धृतप्रमाणवचनम् । (पत्र ४)

''वेदनं वित्, ज्ञानम् । विद् ज्ञानेऽस्मात् 'सम्पदादिभ्यः क्विप्' इति भावे क्विप्, तेन ठाः शून्याः, ठः शून्ये च बृहद्ध्वनावित्यभिधानात् । तान् लाति स्वीकरोतीति विट्ठलः । लाऽदानेऽस्मात् 'आतोऽनुपसर्गे कः' (३/२/३) इति कः । आतो लोपश्चेत्यालोपः । अज्ञानुग्राहक इत्यर्थः ।'' इति ... अन्ये तु ''वेथनं वित्, याञ्चा विथ् याचते क्विबन्तः । तया ठाः शून्या निस्पृहास्तान् लातीति विठ्ठल' इति व्याचक्षते''
– इति च तत्रैव । (पत्र. ४)

**श्रीविट्ठलं** श्रीवामनयोगिनोऽपि...( श्लो.१६)
.... अधोक्षजयोगिनः ।**श्रीविट्ठलं** ..( श्लो.१७) – इति सम्प्रदायपद्धतौ

**भविता** भविष्यति । 'भू सत्तायाम्' इति धातोर्लुट् । **न चेत्** त्वमेवं न करोषि चेत् । **शिक्षामि** ताडयामि । **इति** इममर्थम् । **विट्ठलः स्वावस्थया** स्वमूर्तिसंस्थानेन । **अनुदिनं लक्षयति हि** दर्शयति । लक्ष दर्शनाङ्कनयोरिति धातोर्लट् । विट्ठलस्य भीमरथीतीरस्थत्वेन तीरे सत्सरित इत्ययमर्थः । अम्बरशून्यतया स्थितत्वेन तिरस्कृतधनासक्तिर्विरक्तिप्रिय इत्ययमर्थः । स्वकरस्थशङ्खपद्माभ्यां मदङ्कसहित इत्ययमर्थः । स्वपादमूलस्थाधोमुखाङ्गुल्युपेतकरेण इदं पादाम्भोजमित्ययमर्थः । जघनन्यस्तकरद्वयेन संसारवार्धिः कटिमात्र एव भवितेत्ययमर्थः । ऊरुद्वयमध्यस्थदण्डेन न चेच्छिक्षामीत्ययमर्थो लक्षितो भवतीति ज्ञातव्यम् । अनेन विट्ठलमूर्तेः संस्थानविशेषो वर्णितो भवति ॥ ६ ॥

**पापावलीपाटनपट्वपाङ्गः श्रीपाणिपद्माश्रितजानुजङ्घः ।**
**गोपालबालः कृपया स्वयं नः श्रीपाण्डुरङ्गो भवतु प्रसन्नः ॥ ७ ॥**

**पापावलीति । पापावलीपाटनपट्वपाङ्गः** पापानां आवली परम्परा तस्याः पाटने विदलने पटू समर्थौ अपाङ्गौ यस्य स तथोक्तः । **श्रीपाणिपद्माश्रितजानुजङ्घः** श्रियः लक्ष्म्याः पाणिपद्माभ्यां अश्रितं पूजितं जानुनी च जङ्घे च जानुजङ्घं यस्य तथोक्तः । **गोपालबालः** गोपालश्चासौ बालश्च अथवा गोपालस्य नन्दगोपस्य बालः कुमार इति वा। **श्रीपाण्डुरङ्गः** श्रीविट्ठलः **स्वयं कृपया** दयया । **नः** अस्माकं **प्रसन्नो भवतु** ॥ ७ ॥

**पापापनोदनपटु प्रियभृत्यभृङ्गैः पेपीयमानशुभसुन्दरतारसार्द्रम् ।**
**तापत्रयोपशमनं तरुणार्कवर्णं गोपालबालचरणाम्बुरुहं श्रितोऽस्मि॥८॥**

पुनरपि विट्ठलं वर्णयति – **पापेति । पापापनोदनपटु** पापानां अघानां अपनोदनं अपसरणं तत्र पटु समर्थम् । **प्रियभृत्यभृङ्गैः** प्रियभृत्या एव भृङ्गाः भ्रमराः तैः । **पेपीयमानशुभसुन्दरतारसार्द्रं** पेपीयमानः मुहुर्मुहुः पीयमानः । [३]'सन्यङो'रितिद्विर्वचनं [४]घुमास्थेत्यादिना ईकारः । शुभसुन्दरतेव शोभनसौन्दर्यमेव रसो मकरन्दः तेन आर्द्रं

---

२ पा.सू. (५/२/३७) ३ पा.सू. (६/१/९)

४ पा.सू. (घुमास्थागापाजहातिसां हिल - ६/४/६६)

[१] **तापत्रयोपशमनं** तापत्रयस्य उपशमनं यस्मात् तथोक्तम् । **तरुणार्कवर्णं** बालसूर्य इव वर्णो यस्य तत् तथोक्तम् । **गोपालबालचरणाम्बुरुहं** गोपालबालस्य श्रीविट्ठलस्य चरणाम्बुरुहम् । **श्रितोऽस्मि** ॥ ८ ॥

### गोदावरीनदी

**विप्रर्षिदेवकुलसङ्कुलतीरयुग्मा विद्राविताघतृणरेणुकणा स्ववातैः ।**
**स्वादूदकप्रशमिताखिललोकशोका गोदावरी शुभकरी सरिदुद्धरेन्नः ॥९॥**

गोदावरीं वर्णयति – **विप्रर्षीति** । **विप्रर्षिदेवकुलसङ्कुलतीरयुग्मा** विप्राश्च ऋषयश्च देवाश्च तेषां कुलेन समूहेन सङ्कुलं सङ्कीर्णं तीरयुग्मं यस्याः सा तथोक्ता । **स्ववातैः** स्वस्यामुत्पन्नैर्वायुभिः । **विद्राविताघतृणरेणुकणा** अघान्येव तृणानि रेणवः कणाः शर्कराश्च । अघतृणरेणुकणाः विद्राविताः अघतृणरेणुकणाः यस्याः सा तथोक्ता । **स्वादूदकैः प्रशमिताखिललोकशोका** प्रशमितः अखिललोकस्य शोको यया सा तथोक्ता। **शुभकरी** [२] **गोदावरी सरित्** । **नः** अस्मान् । **उद्धरेत्** उद्धारं कुर्यात् । संसारादिति शेषः ॥ ९ ॥

**अंहांसि हंसि सततं किल रासि पुण्यं**
**सिंहस्थिते सुरगुरौ न तदम्ब याचे ।**
**गोदे समस्तफलदे दिश कृष्णपादे**
**भक्तिं विरक्तिमितरत्र परत्र मुक्तिम् ॥ १० ॥**

**अंहांसीति** । हे **गोदे** गोदावरी त्वम् । **सततं** सर्वदा **सुरगुरोः** सिंहस्थित्यभावेऽपि । **अंहांसि** जनानां दुरितानि । 'अंहो दुरितदुष्कृत'मित्यमरः । **हंसि** संहरसि

---

१ नमामि निखिलाधीशकिरीटाघृष्टपीठवत् ।
**हृत्तमःशमनेऽर्काभं** श्रीपतेः पादपङ्कजम् ॥ – इति द्वादशस्तोत्रे

२ 'तद्गौतमेन गोदत्तं वारि गोदावरी' – इति तत्त्वप्रदीपे (प. २०)

**किल** । हन हिंसागत्योरिति धातोर्लट् । **पुण्यं** सुकृतम् । 'धर्मः पुण्ये वृषः श्रेयः सुकृते च समं स्मृत'मिति हलः । **रासि** ददासि किल । 'रा दान' इति धातोर्लट् । **हे अम्ब!** मातः। **सुरगुरौ** बृहस्पतौ । * **सिंहस्थिते** सिंहराशिस्थिते सति । अहं **तत्** पापपरिहरणं पुण्यं च उभयमपि । **न याचे** । पापपरिहारादेः सर्वदा विद्यमानत्वेन पुण्यकालविशेषेऽपि तस्यैव प्रार्थनायोगात् । नहि विवाहगृहेऽपि यवागुं प्रेक्षावान् कोऽपि प्रार्थयत इति भावः । किन्तु **हे समस्तफलदे!** स्वर्गापवर्गादिसमस्तपुरुषार्थप्रदे गोदावरि । **कृष्णपादे भक्तिं इतरत्र** संसारे । **विरक्तिं** । **परत्र** परलोके । **मुक्तिं च दिश** देहि । एतत्फलस्य इतरा-साध्यमहत्त्वेन तव कालविशेषे महत्त्वनिमित्तमहाप्रसन्नतादशायामेव प्रार्थनीयत्वादिति भावः ॥ १० ॥

**आदौ धवलगङ्गाख्या गङ्गाद्वाराभिधाऽन्तरे ।**
**पश्चात् कुशावर्तपदा गोदा मोदाय सा सदा ॥ ११ ॥**

---

* सिंहस्थिते **गौतमि** देवि भद्रे ब्रह्माण्डभाण्डोपगतानि पुण्ये ।
भुव्यन्तरिक्षे दिवि नागलोके सर्वाणि तीर्थानि तवोदरे स्युः ॥
तिस्रः कोट्योऽर्धकोट्यश्च तीर्थानि भुवनत्रये ।
आयान्ति **गौतमि** स्नातुं सिंहस्थे च बृहस्पतौ ॥
षष्ठिवर्षसहस्राणि भागीरथ्यवगाहनम् ।
सकृद् **गोदावरी**स्नाने सिंहस्थे च बृहस्पतौ ॥
कथञ्चिदपि सिंहस्थे गुरौ स्नानं समाचरेत् ।
**गौतम्यां** जन्मनः पुंसां यत्फलं जीवितस्य तु ॥ —इत्यादि स्मृत्यर्थसागरोद्धृतप्रमाणवचनानि

वृद्धगङ्गे महापुण्ये गौतमस्याघनाशिनि ।
गृहाणार्घ्यं मया दत्तं **गोदावरि** नमोऽस्तु ते ॥ – इति गोदावर्यर्घ्यमन्त्रः

बृहस्पते सुराध्यक्ष सर्वदेवनमस्कृत ।
गृहाणार्घ्यं मया दत्तं सिंहस्थो भार्यया सह ॥ – इति तत्र बृहस्पत्यर्घ्यमन्त्रः

'षण्मासफलदा **गोदा**' – इति कृष्णामृतमहार्णवे ।

विष्णुपादाब्जसम्भूता गङ्गा सर्वाधिका मता ।
ततो **गोदावरी** न्यूना .................. ॥ – इति श्रीराघवेन्द्रतीर्थकृतनादीतारतम्यस्तोत्रे

**गोदावर्यां** ब्रह्मनद्यां वीरनारायणो नृप ।
शङ्खचक्रगदापद्मैः शोभितो ध्येय एव हि ॥ – इति ब्रह्माण्डपुराणे

पुनरपि गोदावरीं वर्णयति – **आदाविति** । **या** आदौ प्रथमं त्र्यम्बकपर्वत-शिखरोपरि वृत्तसूक्ष्मसरोवराकारेण । **धवलगङ्गाख्या** (वर्तते) **अन्तरे** गङ्गाद्वार-कुशावर्तयोर्मध्ये तद्गिरिशिखरमूले वराहनृसिंहतीर्थाख्यकुण्डद्वयाकारेण । **गङ्गाद्वारा-भिधा** गङ्गाद्वारमित्यभिधा यस्याः सा तथोक्ता । **पश्चात् कुशावर्तपदा** गौतममुनिना कुशेन वर्तितत्वात् कुशावर्तनामवती । **सा गोदा सदा मोदाय** स्यादिति शेषः । स्वदृष्टानुसारेण मूलगोदावरीवर्णनमिदम् ।। ११ ।।

## यमुना(नदी)

***कालिन्दि त्वमघान्वितानपि सतः कृत्वा पवित्रात्मनो**
**गन्तुं नैव कदाऽपि मुञ्चसि तव भ्रातुर्निकेतं प्रति ।**
**किन्तु क्षीरपयोधिवासनिरतान् प्रीत्या करोष्याश्रितान्**
**स्निग्धे भर्तरि कामिनीजनरुचिस्तत्पक्ष एव ह्यलम् ।। १२ ।।**

[१] यमुनां वर्णयति – **कालिन्दीति** । **हे कालिन्दि** यमुने । कालिन्दी सूर्यतनया यमुना शमनस्वसे'त्यमरः । **त्वं अघान्वितानपि आश्रितान् सतः** सज्जनान् । **पवित्रा-**

* अयं श्लोकः रुग्मिणीशविजयेऽपि दृश्यते (७/३८) तत्रत्यव्याख्यानं तु –

"कालिन्दीति । हे कालिन्दि त्वम् अघेन पापेनान्वितान् युक्तानपि सतः सज्जनान्पवित्रात्मनः पूतात्मनः कृत्वा तव भ्रातुर्यमस्य निकेतं प्रति गृहं प्रति गन्तुमेव न मुञ्चसि । यातना तु दूरतोऽपास्तेति भावः । किन्तु प्रीता त्वमाश्रितान् तान् क्षीरपयोब्धिवासनिरतान् । क्षीरसमुद्रमध्यस्थ श्वेतद्वीपवासिनः करोषि । कालिन्दीनिषेवणानन्तरं नरकादर्शनं कर्मक्षयः साक्षान्मुक्तिश्च भवतीति भावः । तथाहि भर्तरि स्नेहयुक्ते सति। क्षीरसमुद्रस्य तु चिक्कणताख्यगुणयुक्तत्वात्स्निग्ध इत्युक्तम् । अत एव श्लिष्टगर्भोऽर्थान्तरविन्यासः । कामिनीनां कामवतीनां नारीणां जनस्य रुचिः प्रीतिरलमत्यर्थं तस्य भर्तुः पक्ष एव हि भर्तृप्रेमातिजन्यसुखाभिज्ञत्वात् । अस्माकमपि भर्तारं दिशेति भावः। श्वेतद्वीपं प्रति प्रेषणेन श्रीकृष्णसङ्घटकत्वशक्तिरस्तीति ध्वन्यते । पूर्वार्धेन श्रीकृष्णविरहेण त्वत्तीरस्थानामस्माकं यमलोकप्राप्तिरपि त्वया परिहार्या । श्रीकृष्णसङ्गमप्रतिबन्धक-दुरितध्वंसोऽपि कार्य इति ध्वन्यते ।।"इति ।

१ गङ्गे च **यमुने** चैव...
तुङ्गभद्रासमा तस्याः **कालिन्द्यूना** ततोऽधमा ।। – इति श्रीराघवेन्द्रतीर्थकृतनादीतारतम्यस्तोत्रे
**कालिन्द्यां** यमपुत्रश्च कृष्णनामा हरिर्नृप ।
चतुर्बाहुः सदा ध्येयो दण्डशङ्खारिशार्ङ्गधृक् ।। – ब्रह्माण्डपुराणे

**त्मनः** पवित्रान्तःकरणान्। **कृत्वा तव भ्रातुः** यमस्य **निकेतं** गृहं **प्रति**। **गन्तुं**। **कदापि** कदाचिदपि। **नैव मुञ्चसि**। यमुनासेविनां यमलोकगमनं नास्तीत्यर्थः। **किन्तु त्वं प्रीत्या क्षीरपयोधिवासनिरतान्** क्षीरपयोधिवासे क्षीराब्धिवासे श्वेतद्वीपवास इत्यर्थः। निरतान् **करोषि**। तथाहि। **भर्तरि** पत्यौ **स्निग्धे** स्नेहयुक्ते सति। **कामिनीजनरुचिः** कामिनीजनस्य स्त्रीजनस्य रुचिः। **अलं तत्पक्ष एव** भर्तृपक्ष एव। **हि** प्रसिद्धम्। न तु पितृपक्ष इत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १२॥

## त्रिवेणी(प्रयागक्षेत्रम्)*

**त्रिवेणीयमघश्रेणीकृपाणी मुक्तिकारिणी।**
**ममानीहितमादह्याद्धिमानीमंशुमानिव ॥ १३ ॥**

---

* ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा।
अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ॥ – इति गीताभाष्योद्धृत(३/२०)[१]कूर्मपुराणवचनम्

ब्राह्मीनपुत्री त्रिपथास्त्रिवेणी समागमे तुक्षतयोगमात्रान्।
यत्र प्लुतान् ब्रह्मपदं नयन्ति स तीर्थराजो जयति **प्रयागः**॥
श्यामो वटोऽश्यामगुणं वृणोति स्वच्छायया श्यामलया जनानाम्।
श्यामः श्रमं कृन्तते यत्र दृष्टः स तीर्थराजो जयति **प्रयागः**॥
– इति पद्मपुराणे उत्तरखण्डे प्रयागमाहात्म्ये।

सितासिते सरिते यत्र सङ्गते तत्राप्लुतासौ दिवमुत्पतन्ति।
ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते॥ – इति ऋग्वेदे

सितासिते यत्र तरङ्गचामरे नद्यौ विभाते मुनिभानुकन्यके।
नीलातपत्रं वट एव साक्षात् स तीर्थराजो जयति **प्रयागः**॥
गङ्गायमुनयोर्मध्ये स्नाति यः सङ्गमे नरः।
दशाश्वमेधानाप्नोति कुलं चैव समुद्धरेत्॥
पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम्।
गङ्गायमुनयोर्वीर सङ्गमं लोकविश्रुतम्।
यत्रायजत भूतात्मा पूर्वमेव पितामहः।
**प्रयागमिति** विख्यातं तस्माद् भरतसत्तम॥ – इति भारते (वन. ८७/१८, १९)

---

१ 'इत्यादौ, तत्र पापान्मुक्तिः, स्तुतिपरतया च।' इति तत्रैव निर्णयोऽपि प्रदर्शितः श्रीमदाचार्यैः।

त्रिवेणीं वर्णयति – *त्रिवेणीति । **अघश्रेणीकृपाणी** अघश्रेण्याः पापपङ्क्तेः कृपाणी कर्तरि । 'कृपाणी कर्तरीसमे'त्यमरः । अघच्छेत्रीत्यर्थः । **मुक्तिकारिणी** मुक्तिप्रदा । **इयं त्रिवेणी** सरस्वतीयमुनासमेता या गङ्गा सा त्रिवेणीत्युच्यते । **मम अनीहितं** अनिष्टम् । **हिमानीं** हिमसंहतिम् । 'हिमानी हिमसंहति'रित्यमरः । **अंशुमानिव** सूर्य इव । **आदह्यात्** दहतु । 'दह भस्मीकरण' इति धातोर्लिङ् ।। १३ ।।

**प्रयागमाधवः**

**प्रयागमाधवो भूयाद्दयावारिनिधिर्हृदि ।**
**प्रकृष्टयागसदृशी सकृद्यस्य हि संस्मृतिः ।। १४ ।।**

प्रयागमाधवं वर्णयति – **प्रयागेति । दयावारिनिधिः** दयया वारिनिधिरिव वारिनिधिः । **प्रयागमाधवः** हृदि मनसि । **भूयात्** स्मृतिविषयो भवत्वित्यर्थः ।

---

* व्यासस्य कृपया लक्षालङ्काराख्यः कृतो मया ।
ग्रन्थोऽयं यः प्रभुः कीटमकरोत् पृथिवीपतिम् ।।
भारतस्य सुधाम्बोधेर्भारतीशादयः सुराः ।
यथावन्मथने शक्ताः कृतशिक्षा हरेर्मुखात् ।।
अहं तु मानुषः कुर्यां महाकार्ये कथं मतिम् ।
अत्रास्ति कारणं किञ्चिद्गुह्यं यच्छ्रूयतां बुधैः ।।
**प्रयागे** ब्रह्मणः सन्ध्यामठे जपपरायणः ।
अहमासं तदा लक्षालङ्कारं कुर्विति प्रभुः ।।
भारतस्य श्लोकलक्षस्यार्थविस्तरणात्मकम् ।
कारयामास योगीन्द्रो लक्षालङ्कारमीदृशम् ।।
व्यास एव यतः कर्ता दासस्य हृदि मे स्थितः ।
अतो न विस्मयः कार्यः किमकार्यं महाप्रभोः ।।
सद्वाक्यरत्नमालेयं तद्व्यासस्य गलेऽर्पिता ।
सदा स्यात्स्वाङ्गकान्त्येमां व्यासदेवाय धीमते ।।
असुदेवाय देवेभ्यो गुरुभ्यश्च नमो नमः ।।
श्रीदेव्यै भारतीदेव्यै गौरीदेव्यै नमो नमः ।
नमः शच्यै च रत्यै च मातृभ्यश्च नमो नमः ।। – इति महाभारतलक्षालङ्कारे श्रीवादिराजश्रीचरणकृते

किमर्थमित्यत आह – **प्रकृष्टेति** । **यस्य** प्रयागमाधवस्य । **सकृत् संस्मृतिः** सकृत् स्मरणं **प्रकृष्टयागसदृशी** प्रकृष्टस्य [१] यागस्य अश्वमेधयागस्य सदृशी समाना । तस्य यत्फलं तत्फलं प्रयागमाधवस्मरणस्यापीत्यर्थः । प्रकृष्टयागसदृशस्मृतिविषयत्वात् प्रयागमाधव इति भावः ।। १४ ।।

भागीरथी(नदी)

**त्वं दीनेषु दयावतीति विदितं यद्ब्रह्महस्ताश्रयं**
**प्राप्ताऽथाच्युतपादसङ्गमहिता पश्चाच्च नाकं श्रिता ।**
**सौवर्णाचलशृङ्गमेत्य मुदिता शम्भोः शिरःसङ्गताऽ-**
**प्यास्माकक्षितिमण्डले त्रिपथगे तुष्टाऽस्यभीष्टप्रदा　　।। १५ ।।**

[२] श्रीभागीरथीं वर्णयति – **त्वमिति** । **हे त्रिपथगे** भागीरथि त्रिषु पथिषु स्वर्गमर्त्यपातालेषु गच्छतीति त्रिपथगा तस्याः सम्बुद्धिः । 'भागीरथी त्रिपथगे'त्यमरः । **त्वं दीनेषु** कृपणेषु । **दयावतीति विदितं** ज्ञातम् । **यत्** यस्मात् कारणात् । (पूर्वं) **ब्रह्महस्ताश्रयं** चतुर्मुखहस्ताश्रयम् । **प्राप्ता** ब्रह्माण्डं भित्वा गतायाः ब्रह्मणा कमण्डलौ धृतत्वादिति भावः । **अथ** अनन्तरं । **अच्युतपादसङ्गमहिता** अच्युतस्य श्रीनारायणस्य पादसङ्गेन ब्रह्मणा तत्पादप्रक्षालनस्य कृतत्वान्महिता पूजिता । विष्णुपदीति सर्वैराद्दतेत्यर्थः । **पश्चान्नाकं** दिवो मूर्धानं । **श्रिता** । (पश्चात्) **सौवर्णाचलशृङ्गं** सौवर्णात्मकमेरुमूर्धानं । **एत्य** प्राप्य । **मुदिता** सन्तुष्टा । (अनन्तरं)**शम्भोः शिरःसङ्गताऽपि**

---

१　यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमिति विख्यातं तस्माद् भरतसत्तम ।।　　– महाभारत(३/८७/१९)

२　विष्णुपादाब्जसम्भूता **गङ्गा** सर्वाधिका मता ।　　– इति श्रीराघवेन्द्रतीर्थकृतनादीतारतम्यस्तोत्रे

गङ्गायां माधवो देवः शङ्खचक्रगदाधरः ।
लसत्पद्मधरो ध्येयस्तत्र स्नानं नरेश्वर ।।　　- नद्यभिमानिदेवतास्तोत्र( ब्रह्माण्डपुराण)

विष्णुपादाब्जसम्भूते **गङ्गे** त्रिपथगामिनि ।
गृहाणार्घ्यं मया दत्तं जले सन्निहिता भव ।।　　– इति गङ्गार्घ्यमन्त्रः

इतोऽधिकस्थले सङ्गताऽपीत्यर्थः । **आस्माकक्षितिमण्डले** अस्माकमिदमास्माकं च तत् क्षितिमण्डलं च तस्मिन् । [१]'तस्मिन्नणि च युष्माकास्माकवि'ति आस्माकादेशः । **अभीष्टप्रदाऽसि तुष्टाऽसि** । उत्तमस्थलादन्यत्र गमने निजजनेषु दयैव निमित्तमिति भावः ॥ १९ ॥

**आदौ पादतलोर्ध्वभागमहसा या रक्तनीला हरेः**
**स्वर्गस्त्रीकुचकुङ्कुमाङ्कनयनोपान्तश्रिया‌ऽभ्यन्तरे ।**
**अन्ते शम्भुकपर्दपन्नगगलश्रेणीज्वलज्ज्योतिषा**
**जन्मारभ्य सरस्वतीनतनयासङ्गेव गङ्गाऽस्ति सा ॥ १६ ॥**

**आदाविति** । **या गङ्गा** । **आदौ** विष्णुपादान्निःसरणकाले । **हरेः** श्रीनारायणस्य **पादतलोर्ध्वभागमहसा** पादतलं च तदूर्ध्वभागश्चेति द्वन्द्वसमासः । तयोर्महसा कान्त्या । कान्त्युत्सवौ तु महसीति रत्नमाला । **रक्तनीला** रक्ता च सा नीला चेति समानाधिकरणसमासः । (या) गङ्गा **अभ्यन्तरे** मध्ये । **स्वर्गस्त्रीकुचकुङ्कुमाङ्कनयनोपान्तश्रिया** स्वर्गस्त्रीणां स्नानार्थमागतानां कुचेषु यः कुङ्कुमाङ्कः काश्मीरपङ्कलेपः कुङ्कुमाख्यालङ्कार इति वा । 'अङ्को नाटक विच्छेदे सङ्ख्यायां युधि भूषण' इति रत्नमाला । नयनयोरुपान्तः कटाक्षस्तयोः श्रिया कान्त्या रक्तनीला । कुचकुङ्कुमाङ्कश्रिया रक्ता । कुङ्कुमस्यारुणत्वात् । कटाक्षकान्त्या नीला । कटाक्षस्य नीलत्वात् । (या) गङ्गा **अन्ते शम्भुकपर्दपन्नगगलश्रेणीज्वलज्ज्योतिषा** शम्भोः शिवस्य कपर्दः जटासमूहस्तस्य । पन्नगानां भूषणभूतसर्पाणां गलश्रेणी कण्ठपरम्परा च तयोर्ज्वलज्ज्योतिषा । उज्ज्वलकान्त्या । **रक्तनीला** शम्भुकपर्दज्योतिषा रक्ता । शम्भुकपर्दस्यारुणत्वात् । पन्नगगलश्रेणीज्योतिषा नीला । पन्नगगलश्रेणीनां नीलत्वात् । **सा गङ्गा जन्मारभ्य** न केवलं प्रयाग एव किन्तु उत्पत्तिस्थानमारभ्येत्यर्थः । **सरस्वतीनतनयासङ्गेव** सरस्वती च इनस्य सूर्यस्य तनया यमुना च । तयोः सङ्गो यस्याः सा तथोक्तेव । **अस्ति** वर्तते । सरस्वतीजलस्य अरुणत्वाद्यमुनाजलस्य नीलत्वाच्चेति भावः । **उत्प्रेक्षालङ्कारः** ॥ १६ ॥

---

१ 'तस्मिन्नणि च युष्माकास्माकौ' – (पा.सू. ४/३/२)

**अज्ञानाद्यदि सज्जनेषु रचितद्रोहान्मयि स्वर्धुनि**
**स्वस्फूर्त्या सुजनेषु दूषणगणारोपादवज्ञा तव ।**
**तर्हि त्वां सगरात्मजास्थिनिकरा जानन्ति किं तैः प्रभो-**
**द्रोहः किं न कृतः किमम्ब न हरावरोपिता चोरता ॥ १७ ॥**

**अज्ञानाद्यदीति** । हे **स्वर्धुनि** स्वर्गनदि । **तव मयि अवज्ञा** अवमानः । 'रीढावमाननावज्ञे'त्यमरः । **अज्ञानाद्यदि** अहमज्ञानीति कृत्वेत्यर्थः । अथवा **सज्जनेषु रचितद्रोहात्** कृतापराधनिमित्तात् । **स्वस्फूर्त्या** स्वप्रतिभया वा । **सुजनेषु** वैष्णवजनेषु । **दूषणगणारोपात्** अविद्यमानदोषकथनाद्वा जायते चेदज्ञानादिमत्कृतदोषत्रयान्मयि कृपां न करोषि चेदित्यर्थः । आद्यं दूषयति – **तर्हीति** । **तर्हि सगरात्मजास्थिनिकराः** सगरात्मजानां सगराख्यराज्ञः पुत्राणां **अस्थिनिकराः** अस्थ्नां निकराः । **त्वां जानन्ति किं** जडत्वेन ज्ञानशून्यानां सगरतनयदेहास्थिनिकराणां मज्जनादपि तेषां कुमाराणां त्वया स्वर्गतिर्दत्ता । तथाऽहमपि अज्ञान्येव सन् यद्यपि त्वयि मज्जामि तथाऽप्यज्ञानं निमित्तीकृत्य मय्यवज्ञाकारणं न घटत इति भावः । द्वितीयपक्षेऽपि न घटत इत्याह – **तैरिति** । **तैः** सगरात्मजैः । **प्रभौ** स्वामिनि कपिले । **द्रोहः** शस्त्रताडनादिना प्रहारः । **न कृतः किं** कृत एवेत्यर्थः । तस्मात् सज्जनद्रोहं निमित्तीकृत्यावज्ञा क्रियत इति द्वितीयः पक्षोऽप्यनुपपन्न एवेत्याशयः । अन्त्यं दूषयति – **किमम्बेति** । **हे अम्ब** मातः । अम्बेत्यनेन मात्रा पुत्रापराधः क्षन्तव्य एवेति द्योत्यते । **तैः** सगरात्मजैः । **हरौ** कपिलाख्ये **चोरता** चोरत्वं । **नारोपिता किं** आरोपितैवेत्यर्थः । तस्मात् सुजनेषु दूषणगणारोपं निमित्तीकृत्यावज्ञाक्रियत इति तृतीयः पक्षोऽप्यनुपपन्न एवेति भावः । तथापि तेषु यथा करुणा तथा मयि कृपां कृत्वा मन्निष्ठाज्ञानादिदोषनिकरः परिहर्तव्य इति तात्पर्यः । इयं कथा तु [१] **श्रीमद्भागवतादौ** प्रसिद्धैवेति भावः ॥ १७ ॥

---

१ प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके ।
एष वाजिहरश्चौर आस्ते मीलितलोचनः ॥
हन्यतां हन्यतां पापः इति षष्ठिसहस्रिणः ।
उदायुधा हन्यतां पापः इति तदा मुनिः ॥

**आरभ्याब्जजलोकमाक्षितितलादायातया किं त्वया**
**मच्चित्तं बहुदूरमित्यमलया त्यक्तं भिया जाह्नवि ।**
**अक्षय्याचलतुङ्गशृङ्गनिकरान् निर्भिद्य यान्ती मम**
**स्वल्पं किं बहु मन्यसे शुभकुलं गङ्गेऽन्तरङ्गे चलम् ॥ १८ ॥**

**आरभ्येति** । हे **जाह्नवि** जह्नोरपत्यं स्त्री जाह्नवी तस्याः सम्बुद्धिः । **अब्जजलोकं** अब्जाज्जलजाज्जायत इत्यब्जजो ब्रह्मा । तस्य लोकमित्यर्थः । **आरभ्य आक्षितितलात्** भूलोकपर्यन्तं । आङीषदर्थेऽभिव्याप्तौ मर्यादाभिविधावपि । **आयातया** बहुदूरमागतये-त्यर्थः । **अमलया** निर्मलया । **त्वया मच्चित्तं** मन्मनः । **बहुदूरमिति भिया** भीत्या । **त्यक्तं किं** [2]पञ्चविंशतिकोटियोजनदूरगमनसमर्थया त्वया निकटस्थमच्चित्तं किमर्थं त्यज्यत इत्यर्थः । मद्ध्यानपथे सदा भवेति तात्पर्यार्थः । **हे गङ्गे अक्षय्याचलतुङ्गशृङ्गनिकरान्** अक्षय्याः क्षेतुमशक्याः । [3]'क्षय्यजय्यौ शक्यार्थ' इत्यादेशः । अचलाः पर्वताः तेषां तुङ्गानि उच्चानि शृङ्गाणि सानूनि । 'शृङ्गं प्राधान्यसान्वोश्चे'त्यमरः । तेषां निकरान् समूहान् । **निर्भिद्य यान्ती** गच्छन्ती त्वम् । **मम अन्तरङ्गे** मनसि स्थितं । **चलं** त्वन्नामस्मरणा-देवास्थिरम् । **स्वल्पं अशुभकुलं** पापसमूहम् । **बहु मन्यसे किं** । अक्षय्याचल-भेदनसमर्थया त्वया ममान्तःकरणस्थचलपापनिर्भेदेन न बहु मन्तव्यमिति भावः । मत्पापं [4]परिहरेति तात्पर्यम् । **पर्यायोक्तमलङ्कारः** । 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तरेण यत्' इत्युक्तत्वात् ॥ १८ ॥

---

स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः ।
महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥ ......
अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ।
इमे च पितरो दग्धा **गङ्गाम्भोऽर्हन्ति** नेतरत् ॥ –इत्यादि श्रीमद्भागवते (९/८/१०-१२, १९)

२ पञ्चाशत्कोटिविस्तारो योजनानां समस्तशः ।
यावन्त एते मिलितास्तत्प्रमाण उदीरितः ॥ – म.भा.ता.नि.(२१/५८)

३ 'क्षय्यजय्यौ शक्यार्थे' – पा.सू. (६/१/८१)

४ न **गङ्गासदृशं** तीर्थं न देवः केशवात् परम् । – इति भारते (३/८५.९६)

**अस्थिस्पर्शनमात्रतः किमु तव श्रेयःप्रदत्वं गतं**
**विस्तीर्णा न किमच्युतस्य नगरी मन्मात्रदेशोज्झिता ।**
**तद्वर्त्मापि सकण्टकं किमु सतां सन्तानजोऽहं न किं**
**कस्मादम्ब न मे प्रदास्यसि पदं गङ्गेऽखिलार्थप्रदम् ॥ १९ ॥**

अस्थीति । हे गङ्गे **अस्थिस्पर्शनमात्रतः** सगरात्मजानामस्थिस्पर्शनमात्रेण । **तव श्रेयःप्रदत्वं गतं किमु** न गतमित्यर्थः । **अच्युतस्य नगरी** वैकुण्ठपुरी । [1]**विस्तीर्णा** विस्तृता । **न किम्** । **मन्मात्रदेशोज्झिता किं** विस्तीर्णाऽपि मन्मात्रावस्थानप्रदेशेन त्यक्ता किम् । मन्मात्रावस्थितौ प्रदेशरहिता किमित्यर्थः । (अथवा)**तद्वर्त्मापि** वैकुण्ठ-मार्गोऽपि । [2]**सकण्टकं किमु** । अहं **सतां** वैष्णवानां **सन्तानजो न किं** सन्ताने कुले जात इति न भवामि किम् । अत्र सर्वत्र किंशब्द आक्षेपे । इष्टाप्रदानकारणमेतच्चतुष्टयमपि नास्तीत्यर्थः । **हे अम्ब** मातः गङ्गे । **कस्मात्** कारणात् । **मे अखिलार्थप्रदं** समस्त-पुरुषार्थप्रदम् । **पदं** हरिस्थानं वैकुण्ठमित्यर्थः । **न प्रदास्यसि** अवश्यं दातव्यमित्यर्थः ॥ १९ ॥

**हे गङ्गे तव कोमलाङ्घ्रिनलिनं रम्भोरु नीवीलसत् -**
**काञ्चीदाम तनूदरं घनकुचव्याकीर्णहारं वपुः ।**
**सन्मुद्राङ्गदकङ्कणावृतकरं स्मेरं स्फुरत्कुण्डलं**
**सारङ्गाक्षि जलान्यदिन्दुरुचि ये जानन्ति तेऽन्ये जलात् ॥२०॥**

हे गङ्ग इति । **हे गङ्गे कोमलाङ्घ्रिनलिनं** कोमलं सुकुमारं अङ्घ्रिनलिनं पादकमलं यस्य तत्तथोक्तम् । **रम्भोरु** रम्भावत् कदलीवदूरू यस्य तत् तथोक्तम्।

---

१ तदनादिकालमितमुक्तिरतेरगणय्यशम्भुमुखसङ्घतते: ।
नगरैर्महापुरमसंहतिमल्लसति प्रभोरयमहो महिमा ॥ - सुमध्वविजय (११/१४)

२ एष निष्कण्टकः पन्था यत्र सम्पूज्यते हरिः ।
कुपथं तं विजानीयाद् गोविन्दरहितागमम् ॥ – महाभारते

**नीवीलसत्काञ्चीदाम** नीव्यां लसत् काञ्चीदाम यस्य तत् तथोक्तम् । **तनूदरं** तनु कृशमुदरं यस्य तत् तथोक्तम् । **घनकुचव्याकीर्णहारं** घनयोः कुचयोः व्याकीर्णः पर्यस्तः हारो यस्य तत् तथोक्तम् । **सन्मुद्राङ्गदकङ्कणावृतकरं** सद्भिः मुद्राभिरङ्गुलीयकैरङ्गदैर्बाहुभूषणैः कङ्कणैः करभूषणैश्च आवृतौ आच्छादितौ करौ यस्य तत् तथोक्तम् । **स्मेरं** सस्मितम् । **स्फुरत्कुण्डलं** स्फुरती शोभमाने कुण्डले ताटङ्के यस्य तत् तथोक्तम् । **सारङ्गाक्षि** सारङ्गवत्कुरङ्गवदक्षिणी यस्य तत् तथोक्तम् । **इन्दुरुचि** इन्दोश्चन्द्रस्य रुचिरिव रुचिर्यस्य तत् तथोक्तम् । शुभ्रमित्यर्थः । **तव वपुः** शरीरम् । **जलान्यत्** जलभिन्नमिति । **ये जानन्ति ते** जनाः । **जलात्** जडात् । मूर्खादिति यावत् । **अन्ये** भिन्नाः । 'जलं नीरे जडेष्वपि' इति भास्करः । ज्ञानिन इत्यर्थः । [1]'नह्यम्मयानि तीर्थानि न देवा मृच्छिलामया' इति स्मृतेः ॥ २० ॥

> **श्रीनारायणरामगोपतिहृषीकेशादिरूपोऽक्षम-**
> **स्त्वां हातुं हरिसूकराकृतिरथ श्रीदेवहूत्यात्मजः ।**
> **वेणीमाधवबिन्दुमाधवतनुस्तीरे व्यधत्त स्थितिं**
> **गङ्गे किं बहुनाऽधुनाऽपि वसति त्वद्भर्तृगेहेऽप्यसौ ॥ २१ ॥**

**श्रीनारायणरामगोपतिहृषीकेशादिरूपः । श्रीनारायणो बदरिकाश्रमे । रामदेवः प्रयागाख्ये । अलकनन्दिनी भागीरथीति द्विरूपगङ्गासङ्गमे गोपतिः गोपालकृष्णः । तपोवने चतुर्विंशतिमूर्तिषु मध्ये हृषीकेशः** आदिपदेन जह्नुक्षेत्रे विद्यमानः **अनन्तशयनः** । हस्तिनपत्तने व्यासाश्रमादौ विद्यमानो **गोविन्दव्यासादिरूपो नारायणो** गृह्यते । **हरिसूकराकृतिः** हरिद्वारे चतुर्विंशतिमूर्तिषु विद्यमानहरिरूपो नारायणः । सूकरः श्वेतवराहः सूकरक्षेत्रे । **अथ** अनन्तरं **श्रीदेवहूत्यात्मजः कपिलः** । **वेणीमाधवबिन्दुमाधवतनुः** । **वेणीमाधवः** प्रयागे । **बिन्दुमाधवः** काश्यां चेति तनवो यस्य स तथोक्तः । माधवपदेन गङ्गासागरसङ्गस्थउदारमाधवो गृह्यते । **तीरे** तव तीरे

---

[1] भागवते (१०/८४-११, १०/४८/३१)

**स्थितिं** आवासम् । **व्यधत्त** कृतवान् । **किं बहुना** बहुनोक्तेन किम् । **अधुनाऽपि त्वद्भर्तृगेहे** समुद्रे । **वसति हि** । हरेः समुद्रशायित्वादिति भावः । [1]'यमन्तः समुद्रे कवयो वयन्ति' इत्यादिश्रुतिप्रसिद्धिं हि शब्देनाह । अनेन बदरिकाश्रममारभ्य समुद्रपर्यन्तं गङ्गातीरे विष्णुमूर्तयः तिष्ठन्तीत्युक्तं भवति ।। २१ ।।

**गङ्गे त्वं शुभसञ्चयस्य जयदा दोषात्मनां न त्विति**
**ज्ञातं यत्क्रतुकोटिलभ्यसुकृतस्याभ्युन्नतिं यच्छसि ।**
**दुष्कर्माण्यमितानि दूरयसि यत् त्वद्गेयतोयेक्षया**
**पानेनाप्यवगाहनेन मनसा ध्यानेन गानेन वा ।। २२ ।।**

**गङ्ग** इति । हे **गङ्गे त्वं शुभसञ्चयस्य** शुभानां शुभजीवानां सञ्चयस्य समूहस्य। **जयदा** । **दोषात्मनां तु** पापिनां तु **न** (जयदा) **इति** तत्त्वम् । **ज्ञातं** विदितम् । कथमित्यत आह । **यत्** यस्मात् कारणात् । **त्वं त्वद्गेयतोयेक्षया** तव स्तुत्यजलस्य ईक्षया दर्शनेन । **पानेनापि** अपिशब्दो विकल्पार्थः । **अवगाहनेन** स्नानेन । **मनसा ध्यानेन गानेन वा** स्तुत्या वा । [2]**क्रतुकोटिलभ्यसुकृतस्य** क्रतुकोटिभिः प्राप्यपुण्यस्य । **अभ्युन्नतिं** अभिवृद्धिम् । **यच्छसि** प्रयच्छसि । अनेन शुभसञ्चयस्य जयदेत्युपपादितम् । शुभपदवाच्यत्वात् सज्जनानां सुकृतस्य च । **अमितानि** । अपरिमितानि । **दुष्कर्माणि** पापानि । **दूरयसि** दूरीकरोषि तिरस्करोषीत्यर्थः । अनेन पापात्मनां नेत्युपपादितम् ।

---

१ आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ।। – मनुस्मृतौ (१/१०)

मम योनिरप्स्वन्तः समुद्रे । – इति अम्भृणीसूक्ते (ऋग्वेदे १०/१२५/७)

यमन्तः समुद्रे कवयो वयन्ति । – ऋग्वेदे

समुद्रे अन्तः कवयो विचक्षते । – (ऋग्वेदे) इत्यादि

२ क्रतुकोट्यलभ्यसुकृतस्याभ्युन्नतिं । (पा.)

दुर्जनानां पापस्य च दोषस्वरूपत्वेन दोषात्मपदवाच्यत्वात् । दर्शनस्नानादिना क्रतु-कोटिजनितपुण्यदात्री [1]ब्रह्महत्यादिसमस्तपापक्षयकरीति भावः ।। २२ ।।

## [2]काशीक्षेत्रम्

**रूप्याचले कृतपदोऽपि गिरीन्द्रपुत्रीप्रेमप्रवाहभरमानितमानसोऽपि ।**
**काशीमसीवरणयोः पुरमन्तराले प्रेतावृतामपि सतीपतिरध्यतिष्ठत्** २३

काशीं वर्णयति – **रूप्याचल** इति । **रूप्याचले** रजताद्रौ । 'दुर्वर्णं रजतं रूप्यम्' इत्यमरः । **कृतपदोऽपि** कृतं पदं स्थानं येन स तथोक्तस्थापि । अत्युत्तमस्थले स्थितोऽपीति यावत् । **गिरीन्द्रपुत्रीप्रेमप्रवाहभरमानितमानसोऽपि** गिरीन्द्रस्य हिमाद्रेः पुत्री पार्वती तस्याः प्रेमप्रवाहभरः स्नेहोद्रेकातिशयः तेन मानितं सत्कृतं मानसं मनो येन स तथोक्तस्तथापि । पार्वतीविलासेन सत्कृतोऽपीत्यर्थः । **सतीपतिः** दाक्षायणीपतिः

---

१ सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतम् ।
द्वापरेऽपि कुरुक्षेत्रं **गङ्गा** कलियुगे स्मृता ।।
यावदस्थि मनुष्यस्य **गङ्गायाः** स्पृश्यते जलम् ।
तावत् स पुरुषो राजन् स्वर्गलोके महीयते ।। – इति महाभारते (३/८५/९०-९४)

**गङ्गा** गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
मुच्यते सर्वपापेभ्यः विष्णुलोकं स गच्छति ।। -वराहपुराणे

२ भूमिष्ठाऽपि न यत्र भूस्त्रिदिवतोऽप्युच्चैरधःस्थाऽपि या
या बद्धा भुवि मुक्तिदाः स्युरमृता यस्यां मृता जन्तवः ।
या नित्यं त्रिजगत्पवित्रतटिनीतीरे सुरैः सेव्यते
सा काशी त्रिपुरारिराजनगरी पायादपायाज्जगत् ।। –स्कन्दपुराणे काशीखण्डे वाराणसीमाहात्म्ये।
**वाराणसी** तु भुवनत्रयसारभूता रम्या नृणां सुगदिता किल सेव्यमाना ।
अत्रागता विविधदुष्कृतकारिणोऽपि पापक्षये विरजसः सुमनःप्रकाशः ।। – इति नारदीयपुराणे ।
अहं **काशीं** गमिष्यामि तत्रैव निवसाम्यहम् ।
इति ब्रुवाणः सततं काशीवासफलं लभेत् ।। इति च ।।
'**काश्यां** तु मरणान्मुक्तिः' इति च । - पुराणवचनम् ।

यदङ्घ्रितीर्थेन यदीयनाम्ना बलेन काशी प्रथिता किलासीत् ।
मुरद्विषस्तस्य निवासभूता पुरी त्रिलोक्यामियमद्वितीया ।। – इति रुक्मिणीशविजये (१७/६८)

शिवः **असीवरुणयोः** नद्योः । **अन्तराले** मध्ये स्थितां **प्रेतावृतामपि** प्रेतैः परेतैरावृतां व्याप्तामिति । 'परायुः प्राप्तपञ्चत्वपरेतप्रेतसंस्थिता' इत्यमरः । **अपि**शब्दो गर्हायाम् । प्रेतावृतत्वेन जुगुप्सितामपीत्यर्थः । **काशीं** काश्याख्याम् । **पुरं** 'पूस्त्रीपुरीनगर्यौ वा' इत्यमरः । **अध्यतिष्ठत्** काश्यामावसमकरोदित्यर्थः । [१]अधि शीङ्स्थासां कर्मेत्याधारस्य कर्मत्वं । जुगुप्सितस्यापि [२]काशीक्षेत्रस्य कैलासाधिपतिमनःप्रियत्वं बहुतरपुण्यप्रदत्वा-देवेति भावः ॥ २३ ॥

### काशीस्थो बिन्दुमाधवः

**स बिन्दुमाधवः पायाद्विभोर्यस्य निरीक्षणात् ।**
**अपारोऽपि हि संसारसिन्धुर्बिन्दुत्वमश्नुते ॥ २४ ॥**

तत्र बिन्दुमाधवं वर्णयति – **स** इति । **विभोः** समर्थस्य **यस्य** बिन्दुमाधवस्य । [३]**निरीक्षणात्** । **अपारोऽपि** पाररहितोऽपि **संसारसिन्धुः** संसाराख्यसमुद्रः । **बिन्दुत्वं** जलकणमात्रत्वं **अश्नुते** आप्नोति । **हि** प्रसिद्धम् । **स बिन्दुमाधवः** संसारसिन्धो-र्बिन्दुत्वापादकत्वाद्बिन्दुमाधवाख्यो विष्णुः (मां) पायात् । **बिन्द्वाख्यमुनेः प्रसन्नत्वा-द्बिन्दुमाधवसञ्ज्ञितस्य प्रकारान्तरेण वर्णनादुत्प्रेक्षालङ्कारः** । 'यथार्थस्यान्यथा-क्लृप्तिरुत्प्रेक्षेति विदो विदुः' इति वचनात् ॥ २४ ॥

### काशीस्थः विश्वनाथः

**दोषं मे हर हे हरेति पतितं पादे नखच्छद्मना**
**निर्दोषं मृगबिम्बमेणहरणात् कृत्वेव मूर्ध्नि न्यधात् ।**

---

आप इव **काशिना** सङ्गृभीताः मघवन् काशिचरिते' – इति ऋग्वेदे(७/१०४/८) ।
'यज्ञः **काशीनां** भरतः सात्वतामिव' – इति शतपथब्राह्मणे ।
तेनोपयातेन कदाचनाथ **वाराणसीं** पापनिवारणेन । – इत्यादि सुमध्वविजये (१०/३७-४८)
निखिलाघौघविनाशनपरसौख्यप्रदद्दष्टे। – द्वादशस्तोत्रे
१ 'अधिशीङ्स्थासां कर्म' – पा.सू. (१/४/४६)

**गङ्गातीरनिवासतः शुचितमं कुर्वन्निवाहीश्वरा-**
**सङ्गात् तत् प्रथयन्निव प्रतिदिनं पायात् स मृत्युञ्जयः ॥२५॥**

विश्वनाथं वर्णयति – **दोषमिति**। हे **हर** रुद्र। **मे** मम। **दोषं** कलङ्काख्यम्। **हर** परिहर। **इति नखच्छद्मना** नखव्याजेन। 'कपटो स्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः। **पादे पतितं मृगबिम्बं** मृगः बिम्बे मण्डले यस्य स तथोक्तस्तं शशाङ्कम्। **एणहरणात्** मृगपरिहरणात्। **निर्दोषं** कलङ्करहितम्। **कृत्वैव** मृगमपहृत्य हस्ते धृत्वा स्वपादे पतितं चन्द्रं निष्कलङ्कं कृत्वैवेत्यर्थः। **गङ्गातीरनिवासतः** स्वशरीरस्थ-प्रशस्तभागीरथीतीरनिवासेन। **शुचितमं** अत्यन्तशुद्धं **कुर्वन्निव**। **अहीश्वरासङ्गात्** अहीश्वराणां भूषणभूतानां सर्पाणामासङ्गात् सम्यक् स्पर्शात्। **तत्** निर्दोषत्वम्। **प्रथयन्निव** सर्पस्पर्शनलक्षणदृष्टान्तात् सम्यक् प्रकटयन्निव। **मूर्ध्नि** शिरसि। **न्यधात्** धृतवान्। चन्द्रशेखरत्वादिति भावः। **स मृत्युञ्जयः** शिवः **प्रतिदिनं पायात्** चन्द्रधारणे हेतूनामुत्प्रेक्षणात् मालोत्प्रेक्षालङ्कारः॥ २५॥

**मौलौ यच्चरणाम्बु फालफलके यस्याङ्घ्रिरेणुः कथा**
**कर्णे वाचि यदीयनाम हृदि यद्रूपं यदास्वादितम्।**
**कुक्षौ यत्तपसेऽपटं कटितटं व्याघ्राजिने संस्थितिः**
**पादौ यत्पुरचारिणौ स हि सदा तत्किङ्करः शङ्करः ॥ २६ ॥**

श्रीविश्वनाथस्य [१]हरिभक्तत्वमुपपादयितुमाह – **मौलाविति**। **यस्य** शिवस्य **मौलौ** शिरसि। **यच्चरणाम्बु** यस्य विष्णोः सम्बन्धि पादोदकम्। यस्य शिवस्य **फालफलके** ललाटफलके। (तस्य) विष्णोः **अङ्घ्रिरेणुः** पादरजस्तिष्ठति। यस्य शिवस्य

---

१ हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः॥ (वैष्णवलक्षणम्) – कृष्णामृतमहार्णवे(श्लो.४३)
राम राम रामेति रमे रामे मनोरमे।
सहस्रनाम तत्तुल्यं रामनाम वरानने॥ – पद्मपुराणे
पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः॥ – भागवते (८/७/४०)

**कर्णे** विष्णोः **कथा** तिष्ठति । इति सर्वत्र योज्यम् । यस्य शिवस्य **वाचि यदीयनाम** यदीयं विष्णोः सम्बन्धि च तन्नाम च । यस्य शिवस्य **हृदि** हृदये **यद्रूपं** विष्णो रूपम् । यस्य शिवस्य **कुक्षौ** जठरे **यदास्वादितं** यद्विष्णूच्छिष्टम् । **यस्य** शिवस्य **कटितटं** जघनप्रदेशः **यत्तपसे** यद्विषयकतपश्चरणार्थम् । **अपटं** पटरहितं अभवत् दिगम्बरत्वादिति भावः । **यत्तपसे** यद्विषयकज्ञानाय 'तप आलोचन' इति धातोः । **व्याघ्राजिने** शार्दूलचर्मणि । **संस्थितिः** उपवेशनम् । यस्य शिवस्य । **पादौ यत्पुरचारिणौ** यस्य विष्णोः क्षेत्रं प्रति सञ्चारिणौ । **हि** यस्मात् कारणात् । **सः शङ्करः** शिवः । **सदा तत्किङ्करः** तस्य विष्णोर्दासः । शिवस्य विष्णुभक्तत्वं शिरआदिपादपर्यन्तावयव-व्यापारदर्शने सति सर्वेषां प्रसिद्धमिति द्योतनाय **हि** शब्दः –

'यच्छौचनिःसृतिसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत् ।'
यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजश्च गिरिशः सह लोकपालैः ।'

पायं पायं श्रुतिचुलकितं रामनामामृतं यो
ध्यायं ध्यायं मनसि सततं ब्रह्म तत्तारकाख्यम् ।
जल्पं जल्पं प्रकृतिविकृतौ प्राणिनां कर्णमूले
वीथ्यां वीथ्यामटति जटिलः कोऽपि काशीनिवासी ॥'

'यज्ञवाटगतं सर्वमुच्छिष्टमृषयः क्वचित् ।
चक्रुर्हि भागं रुद्राय स देवः सर्वमर्हति ।
यमुद्दिश्य सदा नाथं महेशोऽपि दिगम्बरः
जटी भस्मावलिप्ताङ्गस्तपस्वी वीक्ष्यते जनैः ॥'

'भवश्च भूतभव्येशो यक्षभूतगणैर्वृतः ।
द्वारकामुपसङ्गमुः सर्वे कृष्णदिदृक्षवः ॥'

–इत्यादिप्रमाणप्रसिद्धिं **हि** शब्देन सूचयति ।

## गयाक्षेत्रम्

**गयाभिधमिदं क्षेत्रं श्रये श्रेयस्करं नृणाम् ।**
**न यत्र सहते जातु क्रिया जन्मान्तरक्रियाम् ॥ २७ ॥**

[१]गयां वर्णयति – **गयेति**। **नृणां श्रेयस्करं** पुण्यकरम्। **इदं गयाभिधं** गयाख्यं **क्षेत्रं श्रये** आश्रये। **यत्र** गयाख्यक्षेत्रे। **जातु** सकृदपि। **क्रिया** पिण्डप्रदानाख्यं कर्म। **जन्मान्तरक्रियां** जन्मान्तरे क्रियमाणपिण्डप्रदानादिक्रियां। **न सहते** सकृत् पिण्डप्रदानेनैव वैकुण्ठप्राप्त्या पुनर्जन्माभावाज्जन्मान्तरक्रियमाणक्रियां न सहत इत्यर्थः ॥ २७ ॥

### गयागदाधरः

**गदाधर सदाऽधरस्फुरितचारुहासोल्लसत्-**
**सुधाधर मदाधरामरकृतस्तुते सुन्दर ।**
**पदा धर मदाधरस्खलितमीश मां सद्वर-**
**प्रदाधरचिदादरप्रमुदितान्तर श्रीधर ॥ २८ ॥**

गदाधरं स्तौति – **गदाधरेति**। **सदा** सततम्। **अधरस्फुरितचारुहासोल्लसत्सुधाधर**। अधरे अधरोष्ठे स्फुरितः उत्पन्नः। चारुर्मनोहरः। हास एव उल्लसत् सुधा तां धरतीति तथोक्तः तत्सम्बुद्धिः। **मुदाधर** मुदमासमन्ताद्धरतीति मुदाधरः तत्सम्बुद्धिः। **अमरकृतस्तुते** अमरैः देवैः कृता स्तुतिः यस्य स तथा तत्सम्बुद्धिः। अथवा **मुदा** प्रीत्या। **धरामरकृतस्तुते** धरामराः भूसुराः ब्राह्मणा इत्यर्थः। तैः कृता स्तुतिर्यस्य स तथोक्तः तस्य सम्बुद्धिः। **सुन्दर** मनोहर। **सद्वरप्रद** सतां वरप्रद इष्टार्थप्रद। **अधरचिदादरप्रमुदितान्तर** अधर इति अहमधम इति चित् ज्ञानं येषां ते अधरचिदः। दासोऽहमिति ज्ञानिन इत्यर्थः।

---

[१] एष्टव्या बहवः पुत्राः यद्येकोऽपि **गयां** व्रजेत्।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ – इति महाभारते।

जीवतो वाक्यकरणात् प्रत्यब्दं भूरिभोजनात्।
**गयायां** पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥ – इति गरुडपुराणे।

**गयायां** धर्मपृष्ठेषु सदसि ब्रह्मणस्पतेः।
**गयाशीर्षे** वटे चैव पितॄणां दत्तमक्षयम्।
**गयायां** नहि तत् स्थानं यत्र तीर्थं न विद्यते ॥ – इति गयामाहात्म्ये।

क्षेत्रे **गयाख्ये**ऽस्य शिशुं प्रजातं सम्प्राप्य दूरेऽत्र बभूव विष्णुः ॥ म.भा.ता.नि. (३२/१४३)

तेषामादरेण स्नेहेन प्रमुदितं सन्तुष्टं आन्तरं हृदयं यस्य स तथोक्तः तस्य सम्बुद्धिः। भक्तजनभक्त्या सन्तुष्ट इत्यर्थः। 'भक्त्यैव तुष्टिमभ्येति' इति[१] स्मृतेः। **श्रीधर** लक्ष्मीधर। **ईश** स्वामिन्। **हे गदाधर**[२]। **मदाधरस्खलितं** मदेनाहङ्कारेण अधरे अधः। स्खलितं पतितम्। **मां पदा** पादेन **धर** धारय। तव चरणध्यानं दत्वा रक्षेत्यर्थः॥ २८॥

## (गयास्थो)विष्णुपादः

**यद्यात्रा पितृमण्डलस्य तनुते वैकुण्ठयात्रां परां**
**यत्र क्षिप्ततिला महान्ति तिलशः कुर्वन्ति पापान्यहो।**
**पिण्डो यत्र समर्पितो यमभटान् पिण्डीकरोत्यक्षता**
**मर्त्यं स्माक्षतमीड्यतां स्तुतिततिस्तं विष्णुपादं भजे ॥ २९ ॥**

श्रीविष्णुपादं[३] वर्णयति – **यद्यात्रेति**। यद्यात्रा यस्य विष्णुपादस्य यात्रा। **पितृमण्डलस्य** यात्राकर्तुः पितृसमुदायस्य **परां** उत्तमाम्। **वैकुण्ठयात्रां तनुते** विस्तारयति। विष्णुपादयात्रया पितॄणां वैकुण्ठप्राप्तिर्भवतीति भावः। **यत्र** विष्णुपादे **क्षिप्ततिलाः महान्ति पापानि तिलशः** अल्पशः। **कुर्वन्ति** विष्णुपादे तिलारोपणेन महापापपरिहारो भवतीति भावः। **अहो** अल्पस्यापि कर्मणः महापापपरिहारसामर्थ्यमाश्चर्यमिति भावः। **यत्र** विष्णुपादे। **समर्पितः पिण्डः यमभटान् पिण्डीकरोति** विष्णुपादे पिण्डप्रदानेन यमदूताः भीताः भवन्तीति भावः। (यत्र समर्पिताः) **अक्षताः**

---

१ भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित्। – इति महाभारततात्पर्यनिर्णतये (१/११७)

२ 'गदा तु वायुर्बलसंविदात्मा' (म.भा.ता.नि. ३/७४) इत्युक्तेः 'गदाधर' इत्यस्य 'वायुधर' इत्यर्थः।

३ नित्योपास्त्यादराभ्यागतगिरिशमुखोदारदैत्यारिवार-
प्रारब्धोरुप्रणामावसरवितरणे प्रीतिहेतोश्चचाल।
यावत् तावत् स्वधर्माचरणरतरमारम्यपादाग्रलीला-
सिञ्जन्मञ्जीरमञ्जुध्वनिपरिचरितः पातु मां **विष्णुपादः**॥
– श्रीत्रिविक्रमपण्डिताचार्यकृतविष्णुस्तुतौ विष्णुपादस्तुतिः(श्लो. १३)

तण्डुलाः । **मर्त्यं** मरणशीलं मनुष्यं **अक्षतं** अमृतं मुक्तमित्यर्थः । **कुर्वन्ति** । विष्णुपादे अक्षतासमर्पणेन मुक्ता [१] भवन्तीत्यर्थः। (यत्र) विष्णुपादे विषये (कृता) **स्तुतिततिः** स्तोत्रसङ्ग्रहः । **ईड्यतां** स्तुतिकर्तुः स्तुत्यताम् । (विधत्ते) **स्म** प्रसिद्धम् । **तं विष्णुपादं** । अहं **भजे** यात्रादेः फलतयाऽपि यात्रादेरेव वर्णनात् **विनिमयोऽलङ्कारः** ।। २९ ।।

फल्गु(नदी)

**अपि जन्मशतोद्भूतं कृपया या हरन्त्यघम् ।**
**मनुते फल्गु सा फल्गुनदी सद्गुणदाऽस्तु मे ।। ३० ।।**

[२] फल्गुनदीं वर्णयति – **अपीति** । **या** फल्गुनदी । **जन्मशतोद्भूतमपि** जन्मशतार्जितमपि । **अघं** पापं **कृपया हरन्त्यपि** । **फल्गु** तुच्छं **मनुते** । 'असारं फल्गु शून्यं च वसेकं तुच्छरिक्तकम्' इत्यमरः । बहुजन्मार्जितपापपरिहाररूपं महोपकारमपि गाम्भीर्याख्यगुणवत्वात् यतः फल्गु मनुते अल्पमेव फलं बहुदूरदागतानां तेषां मया दत्तमिति मनुते । 'त्यागे श्लाघाविपर्यय' इति महतां गुणः । (अतः) **सा फल्गुनदी** फल्गुसञ्ज्ञा सा नदी। **मे** मह्यम् । **सद्गुणदा** निरहङ्कारादिशुभगुणप्रदा । **अस्तु** ।। ३० ।।

मधुरा

**सेना यत्र विरक्तवैष्णवजना नामायुधं श्रीपतेः**
**कामाद्यैः सहितः कलिः किल रिपुर्यत्रान्वहं हन्यते ।**

---

१ ततो गयां समासाद्य ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ।।...
तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
तत्र दत्तं पितृभ्यस्तु भवत्यक्षयमुच्यते ।। – इति महाभारते वनपर्वणि (८४/८२, ८८)

२ ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप ।
अश्वमेधमवाप्नोति सिद्धिं च महतीं व्रजेत् ।।

**प्राकारादि च यत्र तीर्थनिचयः कर्मापि वर्मामलं**
**दद्यात् सा मधुरा पुरी शुभकरी श्रेयांसि भूयांसि नः ॥ ३१ ॥**

[१]मधुरां वर्णयति **सेनेति**। **यत्र** मधुरायां (जिगीषोः) **सेना** चमूः। **विरक्तवैष्णवजनाः**। कामादिजयस्य विरक्तिसाध्यत्वादिति भावः। **आयुधं** प्रहरणं **श्रीपतेः नाम** लघूच्चारितनाम्ना कामादीनां पराभवो भवतीति भावः। **यत्र प्राकारादि च तीर्थनिचयः**। तीर्थसमूहः। यथा प्राकारादिः शत्रुप्रवेशं प्रतिबध्नाति तथा सेवित-तीर्थनिचयः कल्यादिप्रवेशं प्रतिबध्नातीति भावः। (यत्र) **अमलं कर्मापि** कृष्णस्य पूजादिकर्मापि **वर्म** तनुत्रं। 'तनुत्रं वर्म दंशनम्' इत्यमरः। यथा वर्म शत्रुप्रयुक्तं शत्रुघातं प्रतिबध्नातीति तथा विष्णुपूजादिसत्कर्म कलिकार्यं प्रतिबध्नातीति भावः। (यत्र) मधुरायाम्। **कामाद्यैः** कामक्रोधलोभमोहमदमात्सर्यैः षड्भिः कलिभृत्यैः। **सहितः कलिः** कल्याख्यो रिपुः **अन्वहं** निरन्तरम्। **हन्यते**। **सा शुभकरी मधुरापुरी नः** अस्माकम्। **भूयांसि श्रेयांसि** पुण्यानि। **दद्यात्** दिशतु ॥ ३१ ॥

## विश्रान्तितीर्थम्

**संसारसंसरणखेदविभेदकारि**
**कंसारिसंश्रिततटीगतचारुवारि।**
**विश्रान्तितीर्थममलं हरिलोकवास-**
**विश्रान्तिदं दिशतु नः सकलेप्सितानि ॥ ३२ ॥**

---

१. शत्रुघ्नतो लवणमुल्बणबाणदग्धं कृत्वा चकार मधुरां पुरमुग्रवीर्यः।
– इति महाभारततात्पर्यनिर्णये (९/१७)

स शत्रुसूदनोऽवधीन्मधोस्सुतं रसाह्वयम्।
शरेण तेन चाकरोत्पुरीं च माधुराभिधाम्॥ – इति महाभारततात्पर्यनिर्णये (९/८१)

अयोध्या मधुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैते मोक्षदायिकाः॥

पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः। – भागवते (४/९/४२)

[१]विश्रान्तितीर्थं वर्णयति – **संसारेति**। **संसारसंसरणखेदविभेदकारि** संसारे जननमरणरूपसंसरणं सञ्चारः । तस्माज्जातः खेदस्तस्य विभेदं करोतीति तथोक्तम् । **कंसारिसंश्रिततटीगतचारुवारि** कंसारिः श्रीकृष्णः तेन संश्रितं तटीगतं चारु मनोहरं वारि यस्मिन् तत् तथोक्तम् । **हरिलोकवासविश्रान्तिदं** हरिलोके वैकुण्ठे वासस्तेन विश्रान्तिं दुःखाभावं ददातीति तथोक्तम् । **अमलं** निर्मलम् । **विश्रान्तितीर्थं नः** अस्माकम् । सकलेप्सितानि सकलमनोभीष्टानि **दिशतु** ददातु ॥ ३२ ॥

**मखकोटिसहस्राणां मुखं म्लानयतो मुहुः।**
**अघश्रान्तिकरस्यास्य कथं विश्रान्तितीर्थता ॥ ३३ ॥**

तदेव विशदयति – **मखेति**। **मखकोटिसहस्राणाम्** । मखानां अश्वमेधयज्ञानां कोटीनां सहस्राणाम् । **मुखं मुहुः म्लानयतः** विश्रान्तितीर्थस्य यादृशं सामर्थ्यं तादृशं नास्माकमस्तीति लज्जया मुखम्लानिमुत्पादयतः **अघश्रान्तिकरस्य** अघानां पापानां श्रान्तिः शमनं तां करोतीति अघश्रान्तिकरं तस्य। **अस्य** तीर्थस्य **विश्रान्तितीर्थता कथं** (घटते) न घटत इत्यर्थः। **आक्षेपालङ्कारः**॥ ३३ ॥

वृन्दावनम् (क्षेत्रम्)

***यत्कुञ्जा मुरवैरिसङ्गतवधूविक्रीडनैर्वासिता**
**यत्सञ्जातसुरद्रुमौघमहसा विद्योतिताशामुखम् ।**
**यत्पाथः सुरसिन्धुसिन्धुमहितं यत्राखिलैर्लक्षितं**
**श्रुत्यन्तान्तरितं महः परमहो वृन्दावनं पावनम् ॥ ३४ ॥**

वृन्दावनं वर्णयति – **यदिति**। **यत्कुञ्जाः** यस्मिन् वृन्दावने कुञ्जाः लतागृहाः । 'निकुञ्जकुञ्जा वा क्लीबे लतादिपिहितोदरे' इत्यमरः । **मुरवैरिसङ्गतवधूविक्रीडनैः**

---

१ **यमिवृंदमनश्चंद्रः श्रमं परिहरन्निव ।**
**यमुनाकूलमगमद्विमलीकर्तुमंजसा ॥** – इति रुग्मिणीशाविजये(११/६४))

मुरवैरिणा श्रीकृष्णेन सङ्गताः या वध्वः गोप्यस्तासां विक्रीडनैश्चरितैः **वासिताः** परिमलीकृताः । **यत्सञ्जातसुरद्रुमौघमहसा** यस्मिन् सञ्जाताः सुरद्रुमाः देवतरवः मन्दारपारिजातादयः तेषामोघाः समूहाः तेषां सहसा रत्नमयफलपुष्पादिकान्त्या । 'कान्त्युत्सवो तु महसि' इत्यमरः । **विद्योतिताशामुखम्** विद्योतितानि प्रकाशितानि आशामुखानि दिङ्मुखानि यस्य तत् तथोक्तम् । **यत्पाथः** यस्मिन् वृन्दावने पातुं योग्यं पाथः जलम् । **सुरसिन्धुसिन्धुमहितं** सुरसिन्धुः सुरनदी सिन्धुः समुद्रस्ताभ्यां महितं पूज्यमधिकपावित्र्योपेतमित्यर्थः । **यत्र** वृन्दावने **श्रुत्यन्तान्तरितम्** श्रुत्यन्तस्योपनिषदः अन्तरितं दूरीभूतम् । **परं** उत्कृष्टं **महः** कृष्णाख्यं तेजः । तेजोरूपत्वान्मह इत्युक्तम् । **अखिलैः** स्त्रीबालपशुपक्ष्यादिभिः **लक्षितं** दृष्टम् । उपनिषदविषयस्य स्त्रीबालपशुपक्षि-चक्षुर्विषयत्वम् । **अहो** आश्चर्यम् । (अतस्तत्) **वृन्दावनं पावनं** पवित्रम् ।। ३४ ।।

### अयोध्या

**अयोध्या नाम नगरी भाति साध्वीवधूरिव ।**
**वनं गतस्यापि तस्य पादुके याऽकरोत् पतिम् ।। ३५ ।।**

अयोध्यां वर्णयति – **अयोध्येति** । **अयोध्या नाम नगरी** पुरी । **साध्वी** पतिव्रता । **वधूरिव** नारीव । **भाति** शोभते । **या वनं गतस्यापि तस्य** रामस्य । **पादुके** अङ्घ्रिपीठे । **पतिमकरोत्** यथा पत्यौ स्वरक्षकतया प्रेमवती तथा पादुकयोरेवाधीना सती ताभ्यां पालिता अभूत् । न तु पत्यन्तरपरिग्रहं कृतवतीत्यर्थः । पतिव्रता नारी भर्तरि प्रोषिते सति तदीयं वस्त्राभरणादिवस्तु तद्वत्समीक्ष्य यथा तिष्ठति तद्वदियमपि नगरी तिष्ठतीति भावः । **उपमालङ्कारः** ।। ३५ ।।

---

* अस्य पूर्वार्धः रुग्मिणीशविजयेऽपि वर्तते (९/६२) तत्रत्य व्याख्यानं तु –

'यस्य वृन्दावनस्य कुञ्जाः लतामण्टपाः मुरवैरिणा कृष्णेन सङ्गतानां वधूनां स्त्रीणां विक्रीडनैः सुरतक्रीडाभिः वासिताः तयोर्दिव्याङ्गसहजगन्धेन तद्धृतचन्दनकुंकुमकस्तूर्यादिगन्धेन च परिमलीकृताः । यद्वृन्दावनं सञ्जातानां समुद्भूतानां सुरद्रुमाणां कल्पवृक्षाणामोघस्य समूहस्य महसा कान्त्या विद्योतितानि प्रकाशितानि आशानां दिशां मुखानि यस्य तत्तथोक्तम् ।' इति ।

## [१]नैमिषारण्यम्

**मुनीन्द्रमानसावालरूढकृष्णकथालता ।**
**विभाति नैमिषारण्यमही सर्वमहीयसी ॥ ३६ ॥**

---

१ **नैमिषं** मृगयानस्य पापस्यार्धं प्रणश्यति ।
प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ॥
तत्र मासं वसेद्धीरो **नैमिषे** तीर्थतत्परः ।
पृथिव्यां यानि तीर्थानि तानि तीर्थानि **नैमिषे** ॥
कृताभिषेकस्तत्रैव नियतो नियताशनः ।
गवां मेधस्य यज्ञस्य फलं प्राप्नोति भारत ॥
पुनात्यासप्तमं चैव कुलं भरतसत्तम ।
यस्त्यजेन्नै**मिषे** प्राणानुपवासपरायणः ॥
स मोदेत् सर्वलोकेषु एवमाहुर्मनीषिणः ।
नित्यं मेध्यं च पुण्यं च नैमिषं नृपसत्तम ॥ – इति महाभारते वनपर्वणि (८४/६०-६४)

निमिषाः ऋषिनिषेव्यफलाः वृक्षविशेषाः तेऽस्मिन् सन्तीति **नैमिषम्** । चित्रकृन्निमिषोनेमिश्वश्रुलोऽथायुगच्छदः ।इत्यभिधानात् । - विजयध्वजीयटीका

निमिषा नाम ऋषिभोज्यफलोपेता वृक्षविशेषाः तेषां समूहो **नैमिषं** वनम् ।
– यादवेन्द्रतीर्थाः(भागवतटिप्पणी)

निमिषनाम्ना ऋषिणा यत्र तपश्चीर्णं तत्सम्बन्धाद्वा **नैमिषम्** - विजयध्वजीयटीका

**नैमिषे** निमिषमात्रेण यत्र दानवबलं निहतं तदरण्यं नैमिषमित्युच्यते ।नैमिषारण्ये इत्यर्थः । यथोक्तं वराहपुराणे -

एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा ।
उवाच निमिषेणेदं निहतं दानवं बलम् ॥
अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसञ्ज्ञितम् ।
भविष्यति यथार्थं वै ब्राह्मणानां विशेषकम् ॥ इति ।
– यदुपत्याचार्यकृतभागवतटिप्पणी(१/१/४)

विशिष्टक्षेत्रदर्शनाय देवप्रहितस्य सुदर्शनस्य नेमिर्यस्मिन् विशीर्यत तन्निमिषं तदेव **नैमिष**मिति यत् तच्चिन्त्यम् । – विजयध्वजीयव्याख्याने

श्रीनरहर्यादिसुरवरसन्निधानावासे । – विजयध्वजीयव्याख्याने

नैमिषारण्यं वर्णयति – **मुनीन्द्रेति** । **मुनीन्द्रमानसावालरूढकृष्णकथालता** मुनीन्द्राणां शौनकादीनाम् । मानसमेव मन एवालवालं आधारबन्ध इत्यर्थः । 'स्यादालवालमावालमावाप' इत्यमरः । तत्र रूढा उत्पन्ना । कृष्णकथैव लता यस्यां सा तथोक्ता । अरण्ये लतोत्पत्तेरुचितत्वादिति भावः । **सर्वमहीयसी** सर्वेभ्यः क्षेत्रेभ्यो महीयसी श्रेष्ठा । **नैमिषारण्यमही विभाति** शोभते ॥ ३६ ॥

[१]हस्तिनपुरी

**अन्तर्निविष्टकलिकौरवसैनिकाऽपि**
**या धर्ममेव दयितं वरयांबभूव ।**
**योगीन्द्रबुद्धिरिव भीमपराक्रमेण**
**सा भाति हस्तिनपुरी प्रथिता पृथिव्याम्** ॥ ३७ ॥

हस्तिनपुरीं वर्णयति – **अन्तर्निविष्टेति** । **या** हस्तिनपुरी । **अन्तर्निविष्टकलिकौरवसैनिकाऽपि** अन्तर्निविष्टः अन्तःप्रविष्टः कलिरूपो यः कौरवः दुर्योधनस्तस्य सैनिकाः सेनास्थाः । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः । अन्तर्निविष्टः कलिकौरवसैनिका यस्यां सा तथोक्ताऽपि । **भीमपराक्रमेण** भीमस्य भीमसेनस्य पराक्रमेण शौर्येण । **धर्ममेव** युधिष्ठिरमेव । **दयितं** पतिं **वरयांबभूव सा**

---

१ प्राप्तस्ततो **हस्तिनराजधानीं** मासानुवासेह स वासयोग्यान् ।
मठान्तरेऽनन्तगुणान्तरः सन्नेकान्तदेशे सरितोऽसमीपे ॥
भित्वा भुवं देवनदी जगाम शाखाविशेषेण निषेवितुं तम् ।
वाणी च यत्प्रेष्यतया कृतार्था शिवादिवन्द्या न तदत्र चित्रम् ॥
गुरुप्रबर्हस्य पदारविन्दं विदूरतः सा प्रणनाम मूर्ता ।
औदार्यसौन्दर्यतनुं तनुं तामालक्ष्य शिष्यैरतिविस्मितं तैः ॥– इति सुमध्वविजये (१०/३४-३६)

सुहोत्रः खलु इक्ष्वाकुकन्यामुपयेमे सुवर्णां नाम ।तस्यामस्य जज्ञे हस्ती ।य इदं **हस्तिनापुरं** स्थापयामास। एतदस्य **हस्तिनापुरत्वम्** । – महाभारते (आदि. ९५/३४)

अद्यापि वः पुरं ह्येतत् सूचयद्रामविक्रमम् ।
समुन्नतं दक्षिणतो गङ्गायां ननु दृश्यते ॥ – भागवते (१०/९०/५५)

**त्रिलोक्यां प्रथिता** प्रसिद्धा । **हस्तिनपुरी** हस्तिनामकेन राज्ञा निर्मिता नगरी । **योगीन्द्रबुद्धिरिव भाति** शोभते । योगीन्द्रबुद्धिरपि अन्तर्निविष्टः कलिरेव कौरवः तस्य सैनिकाः कामक्रोधादयो यस्यां सा तथोक्ताऽपि रागद्वेषाभिभूताऽपीत्यर्थः । **भीमपराक्रमेण** वाताम्बुपर्णाशनादिभूषणतपश्चर्यया **धर्ममेव** पुण्यमेवाङ्गीकरोति तद्वदिति **श्लेषाभिप्रायः** ॥ ३७ ॥

[१]कुरुक्षेत्रम्

**श्रीभीमसेनकरकञ्जगदाप्रहारै-**
**श्चूर्णीकृताश्वगजपत्तिमृदुग्रपिण्डम् ।**
**उत्खातपार्थशरसस्यपदं कुरूणां**
**क्षेत्रं दिशासु विततान सुकीर्तिधान्यम्** ॥ ३८ ॥

---

१ ततो गच्छेत राजेन्द्र **कुरुक्षेत्र**मभिष्टुतम् ।
पापेभ्यो यत्र मुच्यन्ते दर्शनात् सर्वजन्तवः ॥
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात् सर्वपापैः प्रमुच्यते ॥
पांसवोऽपि **कुरुक्षेत्रे** वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥
मनासाऽप्यभिकामस्य **कुरुक्षेत्रं** युधिष्ठिर ।
पापानि विप्रणश्यन्ति ब्रह्मलोकं स गच्छति ॥
गत्वा हि श्रद्धया मुक्तः **कुरुक्षेत्रं** कुरूद्वहः ।
फलं प्राप्नोति च तदा राजसूयाश्वमेधयोः ॥
पृथिव्यां नैमिषं तीर्थमन्तरिक्षे च पुष्करम् ।
त्रयाणामपि लोकानां **कुरुक्षेत्रं** विशिष्यते ॥
– इति महाभारते (वनपर्वणि ८३/१-३,७,८, ८४/२०३-२०८)

प्राज्ञो राज्ञां त्रिदिवपदवीं **कौरवं क्षेत्र**माप्तः
सस्माराथ स्वविहृतिपतद्धस्तियुद्धोत्सवानाम् ।
सत्यात्माद्यैरिह परिवृतो भाविमारीचदृग्भिः
विस्मेरैः स्वैर्निजनृपतनूहेतिदृष्ट्याऽतितुष्टैः ॥ – इति सुमध्वविजये (१०/४९)

[१]कुरुक्षेत्रं वर्णयति – **श्रीभीमसेनेति** । **श्रीभीमसेनकरकञ्जगदाप्रहारैः** श्रीभीमसेनस्य करकञ्जे या गदा तस्याः प्रहारैः । **चूर्णीकृताश्वगजपत्तिमृदुग्रपिण्डम्** चूर्णीकृताः

---

१ धर्मक्षेत्रे कुरुक्षेत्रे ... । – भगवद्गीतायाम् (१/१)

ततः कुरुक्षेत्रमवाप्य कृष्णो दीक्षां प्रपेदे द्विषडब्दसत्रे ।
स एव च व्यासभृगूद्वहात्मा चक्रेऽत्र सादस्यमजोऽप्रमेयः ॥ – म.भा.ता.नि. (३२/१)

ततो वसन् स्वपुर्यजः क्वचिद्रविग्रहे हरिः ।
सदारपुत्रबान्धवः स्यमन्तपञ्चकं ययौ ॥ – म.भा.ता.नि. (२१/४)

तपस्विवत् स्थितं डाम्भं ज्ञात्वा मारीचमभ्यधात् ।
मध्वः परीक्षया चैनं ते विष्णुद्वेषिणं विदुः ॥
यौधोऽत्र राजा त्वमितीरितेऽमुना ।
ममा( तवा) युधं क्वेति जगाद सत्यवाक् ।
खातेऽमुनोक्ते कुतले महागदां ।
ष्ट्वाऽऽप्तवाचं श्रद्धुर्गुरुं हि ते ॥ – इति सुमध्वविजयभावप्रकाशिकायाम् (१०/४९)

श्रुणु सप्तवनानीह कुरुक्षेत्रस्य मध्यतः ।
येषां नामानि पुण्यानि सर्वपापहराणि च ॥
काम्यकं च वनं पुण्यं तथाऽदितिवनं महत् ।
व्यासस्य च वनं पुण्यं फलकीवनमेव च ॥
तत्र सूर्यवनस्थानं तथा मधुवनं महत् ।
पुण्यं शीतवनं नाम सर्वकल्मषनाशनम् ॥
वनान्येतानि वै सप्त नदीः श्रुणुत मे द्विजाः ।
सरस्वती नदी पुण्या तथा वैतरणी नदी ।
आपगा च महापुण्या गङ्गा मन्दाकिनी नदी ।
मधुस्रवा वासुनदी कौशिकी पापनाशिनी ॥
दृषद्वती महापुण्या तथा हिरण्वती नदी ।
वर्षाकालवहाः सर्वा वर्जयित्वा सरस्वतीम् ॥
एतासामुदकं पुण्यं प्रावृट्काले प्रकीर्तितम् ॥
रजस्वलात्वमेतासां विद्यते न कदाचन ।
तीर्थस्य प्रभावेन पुण्या ह्येताः सरिद्वराः ।
शृण्वन्तु मुनयः प्रीतास्तीर्थस्नानफलं महत् ॥
गमनं स्मरणं चैव सर्वकल्मषनाशनम् ॥ - वामनपुराण( सरोमाहात्म्यं) अ.१३ श्लो,३-१०)

अश्वाश्च गजाश्च पत्तयश्च अश्वगजपत्ति। [२]'द्वन्द्वश्च प्राणितूर्यसेनाङ्गाना'मित्येकवद्भावः। त एव मृदुग्रपिण्डाः कठिनमृत्पिण्डाः यस्मिंस्तथोक्तम्। कृषीवलाः हलोत्पातेनोद्भूतान् मृत्पिण्डान् बीजावपनाय भूमेः समीकरणार्थं लगुडेन चूर्णयति कृषीवलव्यापारो तेनावगम्यते। **उत्खातपार्थशरसस्यपदम्** उत्खाता आरोपिताः। पार्थस्यार्जुनस्य। शरा एव सस्यानि तेषां पदं स्थानम्। **कुरूणां क्षेत्रम् दिशासु** दिक्षु। **सुकीर्तिधान्यं विततान** विस्तृतमकरोत्। तनु विस्तार इति धातोर्लिट्। यथा कृषीवलैः सम्यक्कर्षणेनारोपितसस्यं क्षेत्रं बहुधान्यं फलति तद्वदिति भावः। **रूपकालङ्कारः**॥ ३८॥

---

आद्यं ब्रह्मसरः प्रोक्तं ततो रामह्रदः स्मृतः।
कुरुणा ऋषिणा कृष्टं कुरुक्षेत्रं ततः स्मृतम्॥ – वामनपुराणे (सरोमाहत्म्ये ६, ११ श्लो -२४)

नातः परतर पुण्यं भूमेः स्थानं भविष्यति।
इह तप्स्यन्ति ये केचित् तपः परमकं नराः॥
देहत्यागेन ते सर्वे यास्यन्ति ब्रह्मणः क्षयम्।
यक्ष्यन्ति ये च क्रतुभिर्महद्भिर्मनुजेश्वराः।
तेषां त्रिविष्टपे वासो यावद्भूर्मिर्धरिष्यति॥
पांसवोऽपि **कुरुक्षेत्रात्** वायुना समुदीरिताः।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम्॥– महाभारते( शल्य. अ.५३. श्लो.१७, २१,२२)

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।
यः स्मरेत् **कुरुक्षेत्रं** स बाह्याभ्यन्तरे शुचिः॥
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम्।
इत्येवं वाचमुत्सृज्य सर्वपापैः प्रमुच्यते॥
ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा।
वासः पुंसां **कुरुक्षेत्रे** मुक्तिरुक्ता चतुर्विधा॥
दूरस्थोऽपि **कुरुक्षेत्रे** गच्छामि च वसाम्यहम्।
एवं यः सततं ब्रूयात् सोऽपि पापैः प्रमुच्यते॥ – वामनपुराणे( सरोमाहात्म्ये १२/६,७,८,१०)

**ब्रह्मावर्तं** जनपदमथ च्छायया गाहमानः
**क्षेत्रं** क्षतप्रधनपिशुनं **कौरवं** तद्भजेथाः।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यंषिञ्चन्मुखानि॥ – कालिदासकृतमेघदूते (१/५०)

२ द्वन्द्वस्तु प्राणितूर्यसेनाङ्गानाम्। – पा.सू. (२/४/२)

## [१]शम्बलम्(क्षेत्रम्)

**कलेर्भीरुजना यात शम्बलं जगतां बलम् ।**
**कलिशौर्यहरः कल्की यत्र प्रादुर्भविष्यति ।। ३९ ।।**

शम्बलक्षेत्रं वर्णयति – **कलेरिति** । **कले** कलियुगाभिमानिनोऽसुरात् । **भीरुजनाः** भीतजनाः । या प्रापण इति धातोर्लोट् । शम्बलक्षेत्रयात्रया कलिभयपरिहारो भवतीति भावः । कुत इत्यत आह – **कलिशौर्येति** । **यत्र** शम्बलक्षेत्रे **कलिशौर्यहरः** कलेः शौर्यं सामर्थ्यं हरतीति तथा । **कल्की** कल्किनामा हरिः । **प्रादुर्भविष्यति** ।। ३९ ।।

### षट्प्रयागाः

**षट्प्रयागाः स्ववेगेन कामाद्यरिमहीरुहः ।**
**उन्मूलयन्तु पापाख्यं पङ्कं प्रक्षालयन्तु नः ।। ४० ।।**

---

* अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु ।
जनिता विष्णुयशसो नाम्ना **कल्कि**र्जगत्पतिः – इति भागवते (१/३/२५)

यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः
पाखण्डिनो द्विजजना वृषला नृदेवाः ।
स्वाहा स्वधा वषडिति स्म गिरो न यत्र
शास्ता भविष्यति कलेर्भगवान् युगान्ते ।। – इति भागवते (२/७/३८)

दुष्टकुलान्तक **कल्किस्वरूप** धर्मविवर्धन मूलयुगादे । – इति द्वादशस्तोत्रे (६/८)
कलिमलहुतवह सुभग महोत्सव शरणद कल्कीश हे भव मम शरणं । इति च द्वादशस्तोत्रे

समस्तदस्युविनाशनं तेन दिनात् व्यधायि । – भा.ता.नि. (३२/१६७)

शास्ता भविष्यति कलेर्भगवान् युगान्ते । – भागवते (२/७/३८)

हरिव्रतः कल्किपिता मनुः स्वायम्भुवस्त्विति । – नारायणपण्डिताचार्यकृतअंशावतारे

यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती ।
एकराश्यां समेष्यन्ति तदा भवति तत्कृतम् ।। – भागवते (१२/२/२४)

कलेस्तु कात्कारत एव कल्की ज्ञानं कलङ्कं सुखमेव तद्वान् ।
कल्कीति वा तेन..... ।। – महाभारततात्पर्यनिर्णय (३२/१६४)

षट्प्रयागान् वर्णयति – **षडिति** । **षट्प्रयागाः** षट्सङ्ख्याकाः प्रयागाः । नदीद्वयसङ्गमवन्तोऽन्तर्वेदिप्रदेशाः । **स्ववेगेन नः** अस्माकम् । यथा एते प्रयागाः स्वनदीवेगेन नदीतीरस्थबहुवृक्षानुन्मूलयन्ति । बाह्यपङ्कं **पङ्कं च प्रक्षालयन्तु** शोधयन्तु । **विनिमयोऽलङ्कारः** । वटप्रयागः । देवप्रयागः । रुद्रप्रयागः । स्कन्दप्रयागः । नन्दप्रयागः । केशवप्रयागः । इति वटादिषट्**प्रयागाः** त्रिवेणीसङ्गममारभ्य बदरिकाश्रमपर्यन्तं भागीरथीतीरे स्थाने सन्ति । तेषां प्रार्थनमिदम् ।। ४० ।।

### बदरिकाश्रमम्

**अमरीभ्रमरीपुञ्जसुमरीचिभिरश्चिता ।**
**बदरी वद रे किं किमधरीकुरुते न सा ।। ४१ ।।**

[१]बदरिकाश्रमं वर्णयति – **अमरीति** । (या) **बदरी** बदरिकाश्रमः । **अमरी-भ्रमरीपुञ्जसुमरीचिभिः** अमर्यः देवाङ्गनाः ता एव भ्रमर्यः बदरीपरिमलास्वादनलोलुपा भृङ्ग्यस्तासां तस्य सुमरीचिभिः शोभनकान्तिभिः । **अश्चिता** शोभिता । बदर्यां सुराङ्गना सञ्चरन्तीति भावः । (हे जीव) **सा बदरी** बदरिकाश्रमः । **किं किं** क्षेत्रम् । **नाधरीकुरुते** सर्वमप्यधःकरोतीति भावः । बदरिकाश्रमस्योत्तुङ्गपर्वतशृङ्गगतत्वेन उच्चतायाः

---

१ नेदृशं स्थलमलं शमलघ्नं नास्य तीर्थसलिलस्य समं वाः ।
नास्ति विष्णुसदृशं ननु दैवं नास्मदुक्तिसदृशं हितरूपम् ।। – इति सुमध्वविजये (६/४७)

अन्यत्र मरणान्मुक्तिः स्वधर्मविधिपूर्वकम् ।
बदरीदर्शनादेव मुक्तिः पुंसां करे स्थिता ।।
**श्रीबदर्याश्रमं** पुण्यं यत्र यत्र स्थितः स्मरेत् ।
स याति वैष्णवं स्थानं पुनरावृत्तिवर्जितः ।। – वराहपुराणे

यत्र नित्यं जगन्नाथः साक्षाद्वसति केशवः ।
यत्र यज्ञाः प्रवर्तन्ते नित्यं मुनिगणैः सह ।।
सिद्धक्षेत्रमिदं प्राहुः ऋषयो वीतमत्सराः ।
**विशालां बदरीं** विष्णुस्तां द्रष्टुं सकलेश्वरः ।। - हरिवंशे(भविषत्पर्व. ७६/२५, ३०)

क्षेत्रान्तराणां तदधोगतत्वेन अधमतायाश्च प्रत्यक्षमेव प्रमाणमिति भावः । **छेकानुप्रासाख्यशब्दालङ्कारः** ।। ४१ ।।

---

नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः ।
तस्यातियशसः पुण्यां **विशालां बदरीमनु** ।।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विस्तृतः ।
उष्णतोयवहा गङ्गा शीततोयवहा पुरा ।।
सुवर्णसिकता राजन् **विशालां बदरीमनु** ।
ऋषयो यत्र देवाश्च महाभागा महौजसः ।।
प्राप्य नित्यं नमस्यन्ति देवं नारायणं प्रभुम् ।
यत्र नारायणो देवः परमात्मा सनातनः ।
तत्र कृत्स्नं जगत्सर्वं तीर्थान्यायतनानि च ।।
तत् पुण्यं परमं ब्रह्म तत् तीर्थं तत् तपोवनम् ।
तत् परं परमं देवं भूतानां परमेश्वरम् ।।
शाश्वतं परमं चैव धातारं परमं पदम् ।
यं विदित्वा न शोचन्ति विद्वांसः शास्त्रदृष्टयः ।।
तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः ।
आदिदेवो महायोगी यत्रास्ते मधुसूदनः ।।
पुण्यानामपि तत् पुण्यमत्र ते संशयोऽस्तु मा ।। – इति महाभारते (९०/२४-३२)

स प्रययौ **विशालाम्** । – भागवते (४/१२/१६)

अतीत्य शर्वश्वशुरं गिरिं ते सुवर्णकूटं निषधं गिरिं च ।
मेरोः प्राच्यां गन्धमादे गिरौ च प्रापु**र्बदर्याश्रम**मुत्तमं भुवि ।। – म.भा.ता.नि. (२२/२८३)

गन्धमादे - उत्तुङ्गगन्धमादनपर्वतस्य अधोभागे - अधोभागस्थ नारायणाश्रमे ।
– म.भा.ता.नि. भावप्रकाशिकायाम्

नारायणाश्रमे हिमकाले षण्मासपर्यन्तमाकाशात् पतमानगिरि शृङ्गोपमशिलीभूतहिमानीभयात् तत्रत्याः पशवो पक्षिणो मृगा मनुष्याश्च पाण्डकक्षेत्रं प्रत्यायन्ति । –म.भा.ता.नि.भा.प्र.(११/१७७)

अथ हैमवते तटान्तरे **बदरी**षण्डविशेषमण्डितम् ।
परमाश्रममाश्रयं श्रियः सकलज्ञः स ददर्श विश्रुतम् ।। – सुमध्वविजये (७/१)

अद्यापि **बदरीशैले** बदरीषण्डमण्डिते ।
मध्ये मुनीनामध्यास्ते विद्वान् व्यासस्य सन्निधौ ।।
शरच्छते व्यतीते तु देवानामाज्ञया प्रभोः ।
एकतां मूलरूपेण लोके स्वीये गमिष्यति ।। – सरसभारतीविलासे (७/१०, ७/२५)

### बदर्यां नारायणः

**धर्माद्योऽजनि धर्म एव स रतिं दद्यात् स्वयोगश्रियं**
**योगाभ्यासरतः स्मरादिविजयं कन्दर्पदर्पापहः ।**
**उत्तुङ्गाद्रिगतः सदोच्चपदवीं योषित्कदम्बेषु नः**
**पुत्रीवन्मतिमुर्वशीजनयिता नारायणः सद्गुणान्   ॥ ४२ ॥**

तत्र नारायणं वर्णयति – **धर्मादिति** । यः **धर्मात्** [१]धर्माख्यात् । **अजनि** प्रादुरभूत् । जनी प्रादुर्भाव इति धातोर्लुङ् । **सः** नारायणः । **नः** अस्माकम् । **धर्म एव रतिं दद्यात्** । सर्वेऽपि स्वपितरि स्नेहमुत्पादयन्ति यतोऽतः नारायणस्य [२]तपस्वित्वादित्यर्थः । सः **स्वयोगश्रियम्** स्वविषयकध्यानसम्पदम् (दद्यात्) 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । भावः स्पष्ट एव । **यः कन्दर्पदर्पापहः** काममदहरः । स नोऽस्माकं **स्मरादिविजयं** कामादिविजयं (दद्यात्) तपोविघातायेन्द्रेण नारायणाश्रमं प्रति प्रेषितः कामस्तस्य मनो विजेतुमसमर्थः स्वयमेव तत्परिचारकमनोहरनारीविजितमनस्कः सन्नारायणमर्चयित्वा तत एकामुर्वशीनाम्नीं स्वर्गं प्रतिनिन्य इति [३]**पौराणिकीकथा** । अतः कन्दर्पदर्पापह इत्युक्तम् । यः **उत्तुङ्गाद्रिगतः**

---

१ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर ऋषिप्रवरः प्रशान्तः ।
नैष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ॥
– इति भागवते (२-७-६)

२. भारते ऽपि वर्षे भगवान्नरनारायणाख्य आकल्पान्तमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलम्भनमनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरति । – इति भागवते (५/१९/९)

इन्द्रो विशङ्क्य मम धाम जिघृक्षतीति कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम् ।
गत्वाऽप्सरोगणवसन्तसुमन्दवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥
विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय ऐजमानान् ।
मा भैर्विभो मदन मारुत देववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥
इत्थं ब्रुवत्यभयदे नरदेव देवाः सव्रीडनम्रशिरसः सघृणं तमूचुः ।
नैतद्विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे ॥
– इति भागवते (११/४/६-९)

उच्चपर्वतस्थः । सः । **सदा उच्चपदवीं** उच्चस्थानं दद्यात् । यः **उर्वशीजनयिता** सः **योषित्कदम्बेषु** स्त्रीसमूहेषु । **पुत्रीवन्मतिं** एता मम पुत्र्य इति मनः (दद्यात्) यः **नारायणः** अराः दोषाः तद्विरुद्धत्वान्नाराः गुणाः । तदयनत्वान्नारायणः । 'नगनाकादिवत्समासः' । न समासो वा । तेन न लोपाभावः । तेषामाश्रयो नारायणः गुणपूर्ण इत्यर्थः । सः **सद्गुणान्** ज्ञानानन्दादीन् (दद्यात्) दिशतु ॥ ४२ ॥

बदरीनारायणध्यानम्

**हस्तद्वन्द्वगचक्रशङ्खरुचिरं वृत्तोरुमध्यस्फुर-**
**द्रक्तोत्तानकरारविन्दयुगलं पद्मासनस्थं प्रभुम् ।**
**विष्वङ् नारदमुख्ययोगिनिकरैः संसेव्यमानं सुधा-**
**वीक्षाक्षालितभक्तकिल्बिषविषं नारायणं चिन्तये ॥ ४३ ॥**

बदरीनारायणस्य ध्यानमाह – **हस्तेति** । **हस्तद्वन्द्वगचक्रशङ्खरुचिरं** हस्तयोरूर्ध्वहस्तयोर्द्वन्द्वे गौ गतौ चक्रशङ्खौ ताभ्यां रुचिरं मनोहरम् । **वृत्तोरुमध्यस्फुरद्रक्तोत्तानकरारविन्दयुगलं** वृत्तयोरूर्ध्वमध्ये स्फुरन्तौ रक्तौ रक्ततलौ उत्तानौ ऊर्ध्वमुखौ च तौ करौ च तावेवारविन्दे तयोर्युगलं यस्य स तथा तम् । **पद्मासनस्थं** पद्मासनाख्यासने स्थितं **प्रभुं** समर्थम् । विष्वक् परितः । **नारदमुख्ययोगिनिकरैः** नारदो मुख्यो येषां ते नारदमुख्याः । ते च ते योगिनश्च तेषां निकरैः समूहैः । **संसेव्यमानं** सम्यक् सेव्यमानम् । **सुधावीक्षाक्षालितभक्तकिल्बिषविषं**

---

इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ।
दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥
ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ।
गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥
तानाह देवदेवेशः प्रणतान् प्रहसन्निव ।
आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥
ओमित्यादेशमादाय नत्वा तं सुरबन्दिनः ।
उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ – इति भागवते (११/४/१२-१५)

सुधामयी च सा वीक्षा च [१] सुधावीक्षा । तया क्षालितं शोधितम् । भक्तानां किल्बिषाख्यविषं येन स तथोक्तस्तम् । **नारायणं चिन्तये** स्मरामीति सम्बन्धः ॥ ४३ ॥

**नरपर्वते अवतीर्णो हयग्रीवः**

**यत्र क्षेत्रे विधेः सत्रे हयग्रीवो ह्यवातरत् ।**
**धाराद्वारा त्रयी तत्र श्रूयतेऽद्यापि सूरिभिः ॥ ४४ ॥**

तत्रत्य नरपर्वतेऽवतीर्णं हयग्रीवं वर्णयति – यत्रेति । **यत्र क्षेत्रे** बदरिकाश्रमाख्यक्षेत्रे । **विधेः** ब्रह्मणः **सत्रे** यागे । नरपर्वताग्रस्थितयागकुण्ड इत्यर्थः । **हयग्रीवः** तन्नामा हरिः । **अवातरद्धि** । तत्र **धाराद्वारा** ऋग्वेदयजुर्वेदसामवेदाथर्वणवेदोपवेदाख्यधारापञ्चकद्वारा । त्रयी वेदः । **सूरिभिः** स्नानकर्तृभिर्विद्वद्भिः । **अद्यापि श्रूयते** । ऋग्वेदधारायां ऋग्वेदस्वरवत् यजुर्वेदादिधारासु च तत्तत्स्वरवच्च घोषः **श्रूयत इति किंवदन्ती** । अत एव वर्णितम् ॥ ४४ ॥

**हयग्रीवस्तुतिः**

**धातर्देवसमूह मन्दर महि प्रह्लाद शक्र द्विज-**
**व्रात ख्यातसमुद्र पार्थ शिव सद्धर्मानृतं मा वद ।**
**अश्वग्रीवममुं विहाय कतमं देवं नमामः स्तुमः**
**सत्कुर्मः किमु कर्म शर्मदमितोऽन्यद्ब्रह्म किं वाऽस्ति नः ॥ ४५ ॥**

तमेव हयग्रीवं श्लोकान्तरेण स्तौति – **धातरिति** । अनेन श्लोकेन हयग्रीवमत्स्यादिरूपिणो हरेरवतारकथां मनसि निधाय साक्षिणां विषमसङ्ख्याकत्वनियमेन तस्मिंस्तस्मिन्नवतारे कृतप्रयोजनान् ब्रह्मादिधर्मान्तानेकादशदेवांश्च साक्षीकृत्य हयग्रीवाख्यहरेः सर्वोत्तमतां सर्वजनसम्मतां करोति । तद्विरुद्धदर्शनानि च तत एव धिक्करोति। **तथाहि** ।

---

१ निखिलाघौघविनाशनपरसौख्यप्रददृष्टे। – इति द्वादशस्तोत्रे ।

**हे धातः** मत्स्यावतारे हयग्रीवावतारे च स्वेन स्वेतरैश्चासाध्यानां हरिकृततमोहननमधुकैटभाख्यदैत्यहननवेदाहरणाख्यकर्मणां च साक्षाद्ब्रह्मणैव दृष्टत्वात् । हरेः सर्वोत्तमत्वे स एव मुख्यसाक्षीति भावेन हि धातरिति ब्रह्मणः सम्बुद्धिः ।

**हे दामोदर हे मन्दर** कूर्मावतारे तन्मूलमूर्त्या सर्वासाध्यमन्दरगिर्यानयने च समुद्रजलान्मन्दरोद्धरणे च निरवधिकहरिमाहात्म्यस्य देवसमूहेन मन्दरगिरिणा च साक्षाद्दृष्टत्वात् तयोरुभयोः सम्बुद्धिः ।

**हे महि** वराहावतारे इतरासाध्यरसातलपरिमितघनोदकमध्ये दैत्येन अधोनिमज्जितायाः स्वस्याः उद्धरणस्य मह्यैव दृष्टत्वात् तस्याः सम्बुद्धिः ।

**हे प्रह्लाद** नरसिंहावतारे च सर्वासाध्यहिरण्यकवक्षोविदारणादिमहासामर्थ्यस्य ब्रह्मरुद्रादिकृतस्तुतिप्रणामादेश्च प्रह्लादेनैव दृष्टत्वात् तस्य सम्बुद्धिः । विजातीयकुलजत्वाद्वैरिपुत्रत्वाच्च प्रबलोऽयं साक्षी ।

**हे शक्र** वामनावतारे च पदत्रयेण त्रैलोक्याक्रमणस्य नखाग्रेण ब्रह्माण्डखण्डनस्य च महाप्रतापस्य सहस्राक्षेण दृष्टत्वात् तस्य सम्बुद्धिः ।

**भो द्विजव्रात** परशुरामावतारे च त्रिःसप्तकृत्वः क्षत्रियकुलं संहृत्य विप्रकुलाय सप्तद्वीपसमेतभूमेर्दानादौदार्यगुणस्य निःसीमशौर्यस्य च द्विजा एव साक्षिणा इति भो द्विजव्रातेति सम्बुद्धिः ।

**हे ख्यातसमुद्र** रामावतारे च शराभिमन्त्रणमात्रेण म्लेच्छनिर्दहनस्य सागरजलशोषणस्य चेतरासाध्यसेतुकरणरावणशिरश्छेदादेः कर्मणश्च साक्षात् समुद्रेणैव दृष्टत्वात् तस्य सम्बुद्धिः । समुद्रमध्ये रामसेत्वाख्यमहाक्षेत्रकरणेन समुद्रस्य कीर्तिदानाख्यमुपकारं सूचयितुं ख्यातेति विशेषणम् ।

**हे पार्थ** कृष्णावतारे च विश्वरूपदर्शनादिना भगवन्माहात्म्यस्यार्जुनेनैव दृष्टत्वात् तस्य सम्बुद्धिः ।

**हे शिव** बुद्धावतारे च त्रिपुरसतीपातिव्रत्येन स्तम्भितायाः त्रिपुरदहनशक्तेर्मोहकशास्त्रकर्त्रा बुद्धेनैव पुनरुत्तेजितायास्त्रिपुरदिधक्षोः स्वस्य

भारवशान्मह्यामधोगतमहारथस्य [१]'शम्भुत्रिपुरदाहैकस्थैर्यविश्वरथोद्वहः' इति **वासुदेव-सहस्रनामान्तः**स्थितनामार्थपर्यालोचनया वृषभावतारेण हरिणा स्वशृङ्गाभ्यामुद्धृतस्य भक्तशम्भुकृते दैत्यामृतवापीसमस्तपः[२] इति नामार्थपर्यालोचनया च त्रिपुरान्तः-स्थितकूपपूरितस्य मृतसञ्जीवनहेतुभूतामृतस्य [३]गोरूपेण हरिणा कृतनिःशेषपानाख्य-महोपकारस्य भस्मासुरभयेन पलायमानस्य स्वस्य भस्मीकृतभस्मासुरेण [४]मूलरूपेणैव हरिणा कृतप्राणरक्षणाख्योपकारस्य योगिनीचक्रगुह्ये च [५]योगिनीग्रस्तगिरिशत्राता[६] मेषरूपशङ्करवाहनः [७]'मेषरूपशिवत्राता' इत्यादि नामार्थपर्यालोचनया एकासृग्बिन्दु-पातमात्रेण कोट्यन्धकीभवतोऽन्धकस्यासृक्पानाय सृष्टशक्तिसहस्रस्य नृसिंहरूप-दययैव कृतान्धकहननस्य पुनरसृगासक्तचित्ततया स्वस्यैव भक्षणायोद्युक्तनृहरिदत्त-सत्त्वयोगिनीभयेन मेषेषु मेषीभूतमात्मानं च ग्रसितुकामां तां नाशयितुं पातालादागतेन **चिन्तामणिनृसिंहेण**[८] मेषरूपं स्ववाहनीकृत्य कृतस्यात्मरक्षणस्य योगिनीहननाख्य-महाशौर्यस्य च साक्षाच्छिन्नेनैव दृष्टत्वाद्वादिप्रतिपत्तिपरिहाराय बहुधा शिवं प्रति हरिणा कृतोपकारं शिवमुखेनैव वाचयितुं **हे शिवेति** तस्य सम्बुद्धिः ।

**हे सद्धर्म** कल्क्यवतारे च कलिना कलितानां सकलसद्धर्माणां च कल्किरूपेण हरिणा अखिलान् निहत्य कृतादौ पालनात् तेऽपि तन्माहात्म्ये साक्षिण इति भावेनोक्तं **हे सद्धर्मेति** । हरिकृतशिवयात्रार्चनविप्रपूजनादीनां ''तद्यात्राजनमोहिनी । चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् । जनसङ्ग्रह इत्यूचुः स्मरन्तस्तं जगद्गुरुम्'' इत्यादिस्मृतेः[९] । जनरञ्जनमोहनाद्यर्थं कृतत्वोक्त्या सद्धर्मत्वभावान्न सम्प्रति साक्षीकर्तुं शक्यत इति भावेन सदिति विशेषणं बहुधर्मरक्षणेऽप्येकधर्मरक्षणवत् भगवतो लीलैव न कोऽप्यायास इति भावेनैकवचनम् ।

---

[१,२,५,६,७] इति वासुदेवसहस्रनामसु (पद्मपुराणे उत्तरखण्डे ७१) श्लो. २४४, २४५, १९०, १९६

[३] प्रसिद्धेयं कथा श्रीमद्भागवते (७/१०/५३-७१)

[४] श्रीमद्भागवते (१०/८८/१२-४०)
'मोचितः सङ्कटाच्छिवः' – इति भागवते (१०/८८/३७)

[८] चिन्तामणिनृसिंहः प्रागेव (१/३०, ३१) वर्णितः ।

**अनृतं मा वद** इति प्रत्येकं सम्बध्यते । *साक्षिवचनं वाचयन्तोऽपि प्रत्येकं तत्तन्मुखाद्वाचयन्ति तथेदमपि बोद्धव्यम् ।

**अश्वग्रीवममुं विहाय कतमं देवं नमामः स्तुमः सत्कुर्मः** इत्यनेन शैव-शाक्तेयगाणपतस्कान्दसौरादिदेवतान्तरपरत्वप्रतिपादकदुर्मतधिकरणम् । **किमु कर्म**

---

९ ययौ कैलासमद्रीशं चकारेव तपोऽत्र च ॥
स्वीयानेव गुणान्विष्णुर्युञ्जन्नित्येन शोचिषा ।
शार्वं तपः करोतीव मोहयामास दुर्जनान् ॥
पूर्वं तेनोदितं यत्तल्लोकान् मोहयताऽञ्जसा ।
शर्वं प्रति तवाहं तु कुर्यां द्वादशवत्सरम् ॥
तपोऽसुराणां मोहाय सुरास्सन्तु गतज्वराः। –इति महाभारततात्पर्यनिर्णये (२२/१७२-१७५)

* यस्मान्मयि दयालुस्त्वमाभिमुख्यं पुराऽकरोः ।
तस्मात् कदाऽपि कुत्रापि कुतोऽपि न भयं मम ॥ १ ॥
त्वद्दयार्द्रदृशा दृष्टा ब्रह्माद्या लोकपालताम् ।
अगमन्निगमोद्धर्तः क्व दैन्यं क्व च ते दया ॥ २ ॥
यं पासि त्वं किम्पुरुषे सोऽत्र साक्षी कपीश्वरः ।
तथा विभीषणः साक्षी दिवि साक्षी ध्रुवो ध्रुवः ॥ ३ ॥
भुवोऽधस्ताद्बलिः साक्षी यद्द्वार्यद्यापि वर्तसे ।
धरा च साक्षिणी या प्राग्वराहवपुषोद्धृता ॥ ४ ॥
वेदश्च साक्षी यद्ग्रन्थं बिभर्षि करपञ्जरे ।
गिरिश्च मन्दरः साक्षी देवाश्चाध्वनि चूर्णिताः ॥ ५ ॥
भवः साक्षी भस्मदैत्यभस्मीकरणविक्रम ।
दक्षः साक्षी रक्षितो यस्त्वया देवर्षिसंसदि ॥ ६ ॥
द्रौपदी च तथा साक्षिण्यक्षयाम्बरदायक ।
सौभद्रस्य सुतः साक्षी यं द्रौण्यस्त्रादजीवयः ॥ ७ ॥
सुधादृष्ट्या मृताशेषस्वसैन्योज्जीवनैकद ।
कपिसेना साक्षिणी सा प्रह्लादाजामिळावपि ॥ ८ ॥
भूयो भूयः साहचर्याद्व्याप्तिर्निर्णीयते मया ।
अतस्त्वं नियमेनासि भक्तानां भयभञ्जनः ॥ ९ ॥
अकुतश्चिद्भयं प्राह यतस्ते पादसेवनम् ।
स्मृतिर्भागवताख्या तद्व्याप्तिराप्तोक्तितोऽप्यभूत् ॥ १० ॥
दशदिक्षु गता सद्भ्यः सतां भयजिहीर्षया ।
दशश्लोक्या वादिराजश्चकाराभयसंस्तवम् ॥ ११ ॥ –श्रीवादिराजतीर्थकृत 'अभयसंस्तवः'

**शर्मदं** इत्यनेन **भाट्टप्राभाकरमतधिक्करणम्** । **इतोऽन्यद्ब्रह्म किं वाऽस्ति नः** इत्यनेन **निर्गुणजीवानां परत्वप्रतिपादकदुर्मतनिराकरणम्** । तेषामेव परत्वे अस्मदुक्तसाक्षिणो धात्रादयः तान् देवानभ्यर्च्य तन्मूलरूपैस्तदवताररूपैर्वा अश्वमेधादिकर्मविशेषं कृत्वा वा निर्गुणादिभावनया वा स्वं स्वं कार्यं कुतो न साधयेयुः ? उक्तविधया स्वस्वकार्यार्थमपि अन्यमर्थयमानाः देवाः स्वरक्षणार्थं कल्क्यादिरूपं हरिमपेक्षमाणाः सद्गुणस्य हरेरुपासनयैव स्वस्वरूपनिष्पत्तिं चापेक्षमाणाः निर्गुणब्रह्म च कथं सर्वोत्तमतया मानयेयुः? एवं चोक्तसाक्षिबलात् हयग्रीवाख्यहरेः सर्वोत्तमत्वमतमेव बहुसंवादसद्भावात् प्रामाणिकम् । ततोऽतिरिक्तं सर्वं मतं एकसंवादस्याप्यभावात् अप्रामाणिकमेवेति भाव इति स्थितम् ॥ ४५ ॥

**श्लोकेनैकेन लोकेशश्लोकाल्लेशोऽनुवर्णितः ।**
**तच्च सच्चरितश्चित्ते प्रत्यर्प्य प्रीयतां भवान् ॥ ४६ ॥**

**॥ इति श्रीमद्वादिराजतीर्थश्रीपादविरचिततीर्थप्रबंधे उत्तरप्रबंधः॥**

स्वकृतश्लोकं सकौशलं हरावर्पयन् तत्प्रीतिं प्रार्थयते– **श्लोकेनेति** । **एकेन श्लोकेन** पद्येन । **लोकेशश्लोकात्** लोकेशस्य श्रीनारायणस्य श्लोकात् कीर्तेः । जात्येकवचनमिदम् । बहुतरयशोराशित इत्यर्थः । **'पद्ये यशसि च श्लोक'** इत्यमरः । **लेशः** अल्पो भागः अनेकावतारकथारूपः । **अनुवर्णितः** स्वशक्त्यनुसारेण वर्णितः । **तच्च** वर्णनकौशलं च । **सच्चरितः** शोभनचरितो नारायणः भगवान् । **चित्ते प्रत्यर्प्य** स्थापयित्वा अङ्गीकृत्येत्यर्थः । **प्रीयतां** प्रीतो भवतु । 'प्रीङ् प्रीणन' इति धातोर्लोट् ॥ ४६ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिततीर्थप्रबन्धस्य टीकायां लक्ष्मीपतिभट्टोपाध्यायसूनुनारायणाचार्येण कृतायां गुरुभावप्रकाशिकायां उत्तरप्रबन्धः ॥ २ ॥**

******

# पूर्वप्रबन्धः

गङ्गासागरसङ्गमः

**अब्धे स्निग्धोऽसि सरसेष्वाद्योऽस्यब्जसखोऽप्यसि ।**
**मुखैरनेकैर्यो गङ्गामुखान्याचुम्ब्य जृम्भसे ॥ १ ॥**

वागीशभोगीशगिरीशमुख्यस्वर्गीशवन्द्याङ्घ्रिसरोजयुग्मम् ।
योगीशसन्मानसवासयोग्यं नागेन्द्रतल्पं प्रणतोऽस्मि नित्यम् ॥ १ ॥

हरिभक्तिसुधाम्भोधिसज्जलक्रीडनोत्सुकाः ।
गुरवो वादिराजार्याः करुणां वितरन्तु मे ॥ २ ॥

*श्रीभागीरथीसमेतसमुद्रं वर्णयति – **अब्ध** इति । हे **अब्धे** आपः धीयते अस्मिन्निति अब्धिः समुद्रः । [१]'कर्मण्यधिकरणे चे'ति किप्रत्ययः । तस्य सम्बुद्धिः । (त्वं) **स्निग्धः** स्नेहः चिक्कणाख्यजलगुणः अनुरागश्च तद्युक्तः । **असि** । **सरसेषु** रसेन सहिताः सरसाः तेषु । रसो जलं शृङ्गारश्च । 'रसश्च पारदे नीरे शृङ्गारादौ रसेष्वि'ति रत्नमाला । नदीनदेषु रसिकेषु चेत्यर्थः । [२]**आद्योऽसि** प्राथमिकोऽसि । **अब्जसखोऽप्यसि** अब्जश्चन्द्रस्तस्य सखाऽप्यसि । अपि शब्दः समुच्चये । साध्यत्रयेऽप्येकं हेतुमाह **मुखैरिति**। **यः** त्वं । **अनेकैः मुखैः** मुखमिव मुखानि तैः । नदीसमुद्रसङ्गमप्रदेशं मुखमित्याहुः । **गङ्गामुखानि** गङ्गा सहस्रमुखी भूत्वा समुद्रं गच्छतीत्यतः मुखानीति बहुवचनम् । **आचुम्ब्य जृम्भसे** अभिवर्धसे । जृभि गात्रविनामे लट् । यतोऽतः स्निग्धोऽसीत्यादिना सम्बन्धः । अनेकमुखैः स्त्रीमुखचुम्बनेन स्निग्धत्वं रसिकत्वं सदा स्त्रीमुखचुम्बनादिविलासरसस्य तदुद्दीपनविभावत्वाच्चन्द्रोऽपि सखा । अतोऽब्जसुहृत्त्वं भवति ॥ १ ॥

---

* त्वं देव सरितां नाथ त्वं देवि सरितां वरे ।
उभयोः सङ्गमे स्नात्वा मुञ्चामि दुरितानि वै ॥ – इति गङ्गासागरस्नानमन्त्रः

१ कर्मण्यधिकरणे च – पा.सू. (३/३/९३)

२ 'सरसामस्मि सागरः' – भगवद्गीतायाम् (१०/२४)

### (पुरी)जगन्नाथः

**जगन्नाथो विजयते जगतामर्चितः सदा ।**
**ज्ञानाख्यरम्यपरशोर्यं दारु जगुरागमाः ॥ २ ॥**

पुरुषोत्तमं वर्णयति – **जगन्नाथ** इति । **सदा जगतामर्चितः** पूजितः । [१]'कर्तृकर्मणोः कृती'ति कर्तरि षष्ठी । अत एव **जगन्नाथः** पुरुषोत्तमः । **विजयते** उत्कृष्टो वर्तते । यं जगन्नाथं । [२]**आगमाः** 'अदो यद्दारु प्लवते सिन्धोः पारे अपूरुष'मित्याद्या**गमाः**। **ज्ञानाख्यरम्यपरशोः** ज्ञानमित्याख्या यस्य स तथा स चासौ रम्यपरशुश्च तथा तस्य । **दारु** आधारभूतं काष्ठम् । 'काष्ठं दार्विन्धनमि'त्यमरः । **जगुः** अगायन् । गै शब्द इति धातोर्लिट् । केवलदारुत्वस्य हीनत्वाद्भगवत्परा श्रुतिरिममेवार्थमभिप्रैतीत्युत्प्रेक्षा । यथा परशुराधारभूतदारुसम्बद्ध एव वृक्षं छेत्तुं समर्थमिति भावः । अत्र सम्बन्धो विषय-विषयीभावः । न त्वाश्रयाश्रयिभावः । परशौ तु आश्रयाश्रयिभावः । जगन्नाथ-मूर्तेर्दारुमयत्वादियमुक्तिः ॥ २ ॥

### श्रीशैलमल्लिकार्जुनः[३]

**श्रीशैलशिखरावासो भातीशो मल्लिकार्जुनः ।**
**बद्धस्वीयजटाजूटमध्यस्थ इव चन्द्रमाः ॥ ३ ॥**

---

१ 'कर्तृकर्मणोः कृति' – पा.सू. (२/३/७५)

२ अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम् ।
तदा रमस्व दुर्हणो तेन गच्छ परस्तरम् ॥ – इति ऋग्वेदे (१०/१०/१५५)

३. अश्वमेधमवाप्नोति पूजयित्वा वृषध्वजम् ।
**श्रीपर्वते** महादेवो देव्या सह महाद्युतिः ।
न्यवसत् परमप्रीतो ब्रह्मा च त्रिदशैः सह ॥
तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः ।
अश्वमेधमवाप्नोति परां सिद्धिं च गच्छति ॥ – इति महाभारते वनपर्वणि (८५/१९,२०)

मल्लिकार्जुनं वर्णयति – **श्रीपर्वतेति** । **श्रीपर्वतकृतावासः** श्रीपर्वतः श्रीशैलाख्यो गिरिस्तस्मिन् कृतः आवासो येन स तथोक्तः । **मल्लिकार्जुनः** मल्लिकावन्मल्लिकापुष्पवदर्जुनो धवलः मल्लिकार्जुनः । 'वलक्षो धवलोऽर्जुनः' इत्यमरः । **ईशः** मल्लिकार्जुनाख्यः शिवः । **बद्धस्वीयजटाजूटमध्यस्थः** । बद्धाः स्वीया जटाजूटाः । जटासमूहाः तेषां मध्यं तस्मिंस्तिष्ठतीति तथोक्तः । **चन्द्रमा इव** चन्द्र इव भाति शोभते । **पूर्णोपमा** ।। ३ ।।

### अहोबलनृसिंहः

**अहोबलनृसिंहस्य महोबलमुपाश्रिताः ।**
**असत्तमिस्रसंमिश्रां गणयामो न संसृतिम् ।। ४ ।।**

[१]अहोबलनृसिंहं वर्णयति – **अहोबल** इति । **अहोबलनृसिंहस्य** अहोबलक्षेत्रस्थनृसिंहस्य । **महोबलं** महसस्तेजसः बलं महोबलम् । **उपाश्रिताः** (वयं) **असत्तमिस्रसंमिश्रां** सन्तो न भवतीत्यसन्तः मिथ्याज्ञानिनः प्रतिवादिनः त एव तमिस्रमन्धकारस्तेन संमिश्रां युक्ताम् । **संसृतिं** संसारं । **न गणयामः** तिरस्कुर्म इत्यर्थः । गण सङ्ख्याने लट् । यथा दीपमाश्रितानामन्धकारोपेतमार्गनिस्तरणं न दुर्घटम् । तथा नरसिंहतेजोबलमाश्रितानां कुत्सितप्रतिवादिभरितसंसारनिस्तरणं न दुर्घटमिति भावः ।। ४ ।।

**यस्तम्भे प्रकटीबभूव स मयि स्तम्भायितेऽति स्फुटी-**
**भूयाद्यो भवनाशिनीतटगतश्छिन्द्यात् स मेऽमुं भवम् ।**
**योऽपाद्बालकमप्यसौ नरहरिर्मां बालिशं पातु यो**
**रक्षोऽशिक्षदसौ प्रभुः खलकुलं शिक्षत्वरूक्षप्रियः ।। ५ ।।**

---

१ नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ।
जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ।। – इति मायावादखण्डने

सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।
अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम् ।। – इति भागवते (७/८/१८)

**यः** इति । **यः** नरसिंहः । **स्तम्भे** हिरण्यकशिपुगृहस्थाणौ । **प्रकटीबभूव** । **सः** नरसिंहः । **स्तम्भायितेऽपि** स्तम्भवदाचरतीति स्तम्भायितस्तस्मिन् स्तम्भसदृशेऽपि । ज्ञानादिशून्येऽपीत्यर्थः । **मयि स्फुटीभूयात्** । अपरोक्षीभूयादित्यर्थः । **यः** नृसिंहः **भवनाशिनीतटगतः** भवनाशिन्याः भवनाशिन्याख्यनद्याः तटं तीरं गतः संश्रित इत्यर्थः। **सः** नृसिंहः । **मे अमुं भवं** संसारं । **छिन्द्यात्** । छिदि द्वैधीकरण इति धातोर्लिङ् । भवनाशिनीतटस्थस्य भवनाशकमुचितमिति भावः । अस्मिन् पद्ये सर्वत्रैवमेव भावो द्रष्टव्यः । **यः** नृसिंहः । **बालकमपि** प्रह्लादम् । **अपात्** अरक्षत् । 'पा रक्षण' इति धातोर्लङ् । **असौ नरहरिः** नरश्चासौ हरिः सिंहश्च नरहरिः । **बालिशं** पूर्वोत्तरानभिज्ञं । **मां पातु** रक्षतु । **यः** नृसिंहः । **रक्षः** हिरण्यकशिप्वाख्यराक्षसं । **अशिक्षत्** जघान । **अरूक्षप्रियः** शान्तप्रियः । **असौ प्रभुः** नरसिंहः । **खलकुलं** दुर्जनसमूहम् । **शिक्षेत्** । 'शिक्ष हिंसायामि'ति धातोर्लिङ् ॥ ५ ॥

**विरुद्धधर्मधर्मित्वं सर्वान्तर्यामितां तथा ।**
**नरसिंहोऽद्भुतस्तम्भसम्भूतः स्पष्टयत्ययम् ॥ ६ ॥**

**विरुद्धेति** । **अद्भुतस्तम्भसम्भूतः** अद्भुतश्चासौ स्तम्भसम्भूतश्च अद्भुतस्तम्भसम्भूतः । **अयं नरसिंहः** नरश्चासौ सिंहश्च नरसिंहः । अन्यत्र सहानवस्थितनराकारसिंहाकारवान् । स्वस्मिन् विद्यमानं [1]**विरुद्धधर्मधर्मित्वं** विरुद्धाः सहानवस्थानविरोधयुक्ताः ये धर्माः युगपदणुत्वमहत्त्वादयस्तेषां धर्मी आधारस्तस्य भावस्तत्त्वं तत् । **तथा सर्वान्तर्यामितां** सर्वेषामन्तर्यामी तस्य भावस्तथा तां सर्वान्तर्गतत्वम् । तथाशब्दः समुच्चये । **स्पष्टयति** प्रकटीकरोति । विरुद्धयोर्नरत्वसिंहत्वयोरधिकरणत्वेन विरुद्धधर्मधर्मित्वम् । स्तम्भसम्भूतत्वेन सर्वान्तर्यामित्वं स्पष्टयतीति भावः । नराकारसिंहा-

---

१ 'सर्वधर्मोपपत्तेः' – इति ब्रह्मसूत्रम् (२/१/३८)

गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।
चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथा प्रतीताः ॥
इति सर्वगुणोपपत्तिश्रुतेश्च ॥ – इति च तद्भाष्यम् ।

कारत्वाद्विश्वाकारतां स्पष्टयतीति मायावादिनः । 'यः पञ्चाननः पाञ्चजन्यवपुषा व्यादिष्ट विश्वात्मताम्' इति तत्त्वप्रदीपिकायामुक्तत्वात् । सिंहाकारत्वेन नरतादात्म्याभावस्य नराकारत्वेन सिंहतादात्म्याभावस्य उभयाकारत्वेन नरसिंहव्यतिरिक्तसकल-जीवतादात्म्याभावस्य च सूचितत्वेन मायावाद्यभिलषितप्रमेयस्य विरुद्धत्वात् । नरसिंहाकारस्य प्रह्लादपरिपालनेन हिरण्यकशिपोरुदरविदारणेन विरुद्धत्वाच्च सर्व-तादात्म्यस्य । नहि स्वात्मानमेव स्वयं रक्षति शिक्षयति चेति युक्तम् । अतो यत्किञ्चिदेतत् ॥ ६ ॥

**विदारितरिपूदरप्रकटितान्त्रमालाधरं**
**तदात्मजमुदावहप्रियतरोग्रलीलाकरम् ।**
**उदाररवपूरिताम्बुजभवाण्डभाण्डान्तरं**
**सदा नरहरिं श्रये नखरनव्यवज्राङ्कुरम्** ॥ ७ ॥

**विदारितेति** । **विदारितरिपूदरप्रकटितान्त्रमालाधरं** विदारितं यद्रिपूदरं हिरण्य-कशिपूदरं तस्मात् प्रकटिताः आन्त्रमालाः आन्त्राण्येव मालास्ताः धरतीति तथोक्तम् । **तदात्मजमुदावहप्रियतरोग्रलीलाकरं** तस्य हिरण्यकशिपोरात्मजः पुत्रः प्रह्लादस्तस्य मुत् हर्षस्तमावहन्तीति तदात्मजमुदावहास्ताः च ताः प्रियतराः सज्जनानां प्रियतरास्ताश्च ता उग्राः दुष्टानां भयङ्करास्ताश्च ता लीलाः विलासाश्च तासामाकरः आश्रयस्तम्। **उदाररवपूरिताम्बुजभवाण्डभाण्डान्तरं** उदारः उत्कृष्टः रवः नादः तेन पूरितं यदम्बुज-भवाण्डभाण्डान्तरं अम्बुजात् हरिनाभिपद्मात् भवतीत्यम्बुजभवो ब्रह्मा तस्याण्डं ब्रह्माण्डं तदेव भाण्डं मृण्मयपात्रविशेषः । तस्यान्तरं मध्यं येन स तथोक्तस्तम् । [१] **नखर-नव्यवज्राङ्कुरं** नखरा एव नखा एव नव्यवज्राङ्कुराः नव्याः स्तुत्याः वज्राङ्कुराः यस्य सः

---

१ पान्त्वस्मान् पुरुहूतवैरिबलवन्मातङ्गमाद्यद्घटा-
कुम्भोच्चाद्रिविपाटनाधिकपटुप्रत्येकवज्रायिताः ।
श्रीमत्कण्ठीरवास्यप्रततसुनखराः ........... ॥ –इति नखस्तुतौ ।

तथा तम्। **नरहरिं** नरश्चासौ हरिश्च तं नरसिंहम्। **सदा** निरन्तरम्। **श्रये** अहमाश्रये। **पृथ्वीवृत्तम्**॥ ७॥

**उद्यन्मध्वमतायुधेन परितः संसारसञ्ज्ञे वने**
**माद्यन्मायिमतङ्गमर्दनविधौ सोऽहं सहायस्त्विति।**
**हर्यक्षस्य सदृक्षतां वहति यस्तस्य द्वितीयोऽप्यहं**
**साजात्येन सदेति मानवतुलां पायान्नृसिंहः प्रभुः ॥ ८॥**

**उद्यदिति**। **यः** नरसिंहः। **संसारसञ्ज्ञे** संसार इति सञ्ज्ञा यस्य तत्संसारसञ्ज्ञं तस्मिन्। **वने उद्यन्मध्वमतायुधेन** उद्यत् लसत् यन्मध्वमतं मध्वाचार्यकृतमतं तदेवायुधं तेन। **परितः** अभितः। **माद्यन्मायिमतङ्गमर्दनविधौ** माद्यन्तः उद्धताः मायिन एव मतङ्गा गजाः तेषां यन्मर्दनं पराजयरूपमर्दनं तस्य विधिराचरणं तस्मिन्। पर्वतविशेषवाचि-मतङ्गशब्दो लक्षणया अतिकठोरत्वज्ञापनाय मतङ्गेति प्रयुक्तः। यद्वा मतङ्गः पर्वतः एषामस्तीति मतङ्गाः। [1]अर्श आदिभ्योऽजिति मत्वर्थे अच्। मतङ्गपर्वते विद्यमानाः गजाः मतङ्गाः। **सोऽहं सदा सहायस्त्विति** (प्रदर्शनाय) **हर्यक्षस्य** सिंहस्य। 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरि'रित्यमरः। **सदृक्षतां** सदृक्षः सदृशस्तस्यभावः सदृक्षता तां सिंहाकारमित्यर्थः। **वहति** धरति। गजजये सिंहस्यैव सहायत्वसम्भवात् सिंहाकारं बिभर्तीत्यर्थः। श्रीमध्वाचार्यमतानुवर्तिभिः क्रियमाणमायावादपराजयस्य नरसिंहः सहायो भवतीति भावः। **तस्य** श्रीमध्वाचार्यमतानुवर्तिनः पुरुषस्य **साजात्येन** समाना जातिर्यस्य स सजातिः। सजातेर्भावः साजात्यम्। तेन मनुष्यत्वसाजा-त्येनेत्यर्थः। **अहं सदा द्वितीयोऽपि** सहायोऽपि (भवामीति प्रदर्शनाय) **मानवतुलां** मानवस्य तुला साम्यं मानवतुला तां मनुष्याकारमित्यर्थः। **वहति** धरति। 'वह प्रापणे' लट्। स **प्रभुः** नृसिंहः (अस्मान्) पायात्॥ ८॥

---

१. 'अर्श आदिभ्यो अच्' – पा.सू. ५/२/१२७

भवनाशिनी(नदी)

**नृसिंहविलसत्पादकुशेशयकृतोत्सवे ।**
**भवनाशिनि मच्चीर्णपापानां भव नाशिनी ॥ ९ ॥**

[१]भवनाशिनीं प्रार्थयते – **नृसिंहेति** । **नृसिंहविलसत्पादकुशेशयकृतोत्सवे** । ना चासौ सिंहश्च नृसिंहः । तस्य यौ विलसत्पादौ तावेव कुशेशये कमले । 'सहस्रपत्रं कमलं शतपत्रं कुशेशय'मित्यमरः । तयोः कृतः अभिषेकादिना कृतः उत्सवो यया स तत्सम्बुद्धिः । यद्वा नृसिंहविलसत्पादयोः कृतः स्वाम्बुनि स्थितपद्मैः सम्पादितः उत्सवः लोकानामुत्सवो यया सा तत्सम्बुद्धिरिति वा । **हे भवनाशिनी** (त्वं) **मच्चीर्णपापानां** मम मया चीर्णानि कृतानि पापानि तेषाम् । **नाशिनी** विनाशकरी **भव** ॥ ९ ॥

निवृत्तिसङ्गमः[२]

**निवृत्तिसङ्गमो भाति यत्र मर्त्यमुपाश्रिताः ।**
**निवर्तन्तेऽखिला दोषाः संयुनक्ति शुभावलिम् ॥ १० ॥**

निवृत्तिसङ्गमं स्तौति – **निवृत्तिसङ्गम** इति । **यत्र** निवृत्तिसङ्गमे । **मर्त्यं** मनुष्यम् । **उपाश्रिताः अखिला दोषा निवर्तन्ते** । (यः) निवृत्तिसङ्गमः । **मर्त्यं** मनुष्यम् । **शुभावलिं** शुभसञ्चयनम् । **संयुनक्ति** संयोजयति । 'युजिर् योग' इति धातुः । (स) **निवृत्तिसङ्गमः** कृष्णवेणीमलापहरीभीमरथीतुङ्गाभद्राभवनाशिन्याख्यसप्तनदीनां सङ्गमो **निवृत्तिसङ्गम** इत्युच्यते । **भाति** शोभते । तस्य सकलदोषनिवर्तकत्वात् शुभ-सङ्गमयितृत्वाच्च निवृत्तिसङ्गमत्वमिति भावः ॥ १० ॥

---

१ भवनाशिन्यां भगवान्नृसिंहो ध्येयः । – 'नृसिंहं भवनाशिन्यामि'ति ब्रह्माण्डपुराणोक्तेः ।

२ निवृत्तिसङ्गमो हि – 'कृष्णा, वेणी, मलापहरी, भीमरथी, तुङ्गा, भद्रा, भवनाशिनी चेति सप्तनदीनां सङ्गमः ।

### तुङ्गभद्रा(नदी)

**नतोऽस्मि तुङ्गां विलसत्तरङ्गामघौघभङ्गां हरिपादसङ्गाम् ।**
**श्रितोऽस्मि भद्रां हृतपापनिद्रां विमुक्तिपद्यां विमलैकसाध्याम् ॥११॥**

[१]तुङ्गभद्रां वर्णयति – **नतोऽस्मीति** । **विलसत्तरङ्गां** विलसन्तस्तरङ्गाः यस्यां सा तथोक्ता ताम् । **अघौघभङ्गां** अघानां पापानामोघाः समूहास्तेषां भङ्गः यस्याः सेति पञ्चमीबहुव्रीहिः । **हरिपादसङ्गां** हरेः पादौ तयोः सङ्गो यस्याः सा ताम् । **तुङ्गां** तुङ्गाख्यां नदीम् । **नतोऽस्मि** नमस्करोमि । अहमिति कर्तृपदाध्याहारः । **हृतपापनिद्रां** हृता परिहृता पापाख्यनिद्रा ताम् । **विमुक्तिपद्याम्** । विमुक्तेर्मोक्षस्य पद्या पद्धतिः तां मोक्षमार्गभूतामित्यर्थः । 'सरणिः पद्धतिः पद्ये'त्यमरः । **विमलैकसाध्यां** विमलाः निर्मलान्तःकरणाः पुरुषास्तैः साध्यां प्राप्याम् । **भद्रां** भद्राख्यां नदीम् । **श्रितोऽस्मि** आश्रितोऽस्मि ॥ ११ ॥

**तटिनीषु तुङ्गभद्रे स्वादूदकसङ्कुला त्वमसि नूनम् ।**
**कस्मात् तीर्थपदोऽसौ धत्ते त्वामेव दंष्ट्रयोर्नो चेत् ॥ १२ ॥**

**तटनीष्विति** । हे **तुङ्गभद्रे** त्वं **तटनीषु** नदीषु मध्ये । निर्धारणे सप्तमी । 'तटिनी ह्रादिनी धुनी'त्यमरः । **स्वादूदकसङ्कुला** स्वादु च तदुदकं च स्वादूदकं तेन सङ्कुला व्याप्ता । **असि** भवसि । **नूनं** निश्चयः । **नो चेत्** [२]**तीर्थपदः** तीर्थानि पदे पादे यस्य स तीर्थपादः । **असौ** विष्णुः । **त्वामेव** इतरनदीर्विहाय । **दंष्ट्रयोः** प्रधानदन्तयोः । **कस्मात्** किमर्थम् । **धत्ते** । माधुर्यास्वादनव्यतिरेकेण दंष्ट्रयोर्धारणे प्रयोजनाभावादिति भावः । वराहदंष्ट्रयोरुत्पन्नत्वात् तुङ्गभद्राया इयमुत्प्रेक्षा ॥ १२ ॥

---

१ तुङ्गे तुरङ्गवदनोत्तुङ्गदंष्ट्रासमुद्भवे ।
तं गेयं कविभिर्मेऽन्तरङ्गे साङ्गं स्थिरी कुरु ॥ – इति सरसभारतीविलासे(२/४८)

२ 'पुण्यश्लोकस्तीर्थपादः' – इति कृष्णाष्टोत्तरशतनामस्तोत्रे

तुङ्गभद्रातीरस्थो विट्ठलः

**चौर्यान्मातृनिबद्धचारुचरणः पापौघचौर्याद्बुधै-**
**र्बद्धस्त्वं पथि पुण्डरीकमुनिना जारेति सम्बोधितः ।**
**तुङ्गातीरगतोऽसि विट्ठल दिशन्नन्याकृतिर्वाञ्छितं**
**वेत्तॄणां यदि मे न दास्यसि तदा त्वत्संस्थितिः कथ्यते ॥१३॥**

तुङ्गभद्रातीरस्थं [१]विट्ठलं वर्णयति – **चौर्यादिति** । हे **विट्ठल** श्रीकृष्ण । [२]**चौर्यात्** नवनीतादिचौर्यान्निमित्तात् । **मातृनिबद्धचारुचरणः** मात्रा यशोदया निबद्धौ चारुचरणौ यस्य स तथोक्तः । पश्चात् बुधहृदयगुहां प्रविष्टस्तत्रापि । **पापौघचौर्यात् बुधैः** ज्ञानिभिः। **बद्धः** नवनीतचौर्यादिदिव्यकर्मस्मरणेन सकलदुरितक्षये सति निर्मलान्तःकरणैः ज्ञानिभिः स्वहृदये भक्तिपाशेन स्थापित इत्यर्थः । **त्वं** उभयत्रापि चौर्यनिमित्तबन्धनप्राप्त्याऽन्यत्र गच्छन् । **पथि** मार्गे भीमरथीतीरे । **पुण्डरीकमुनिना** पुण्डरीकाख्यमुनिना । **जारेति** उपपत इति । **सम्बोधितः** आहूतोऽसि । **अन्याकृतिः** चौर्यापवादगूहनार्थमन्यत्र गमने मम जारत्वमनेन ज्ञातव्यमित्येव वेषान्तरं परिगृह्णन् । **वेत्तॄणां** चौर्यजारत्वादिज्ञानवतां । **वाञ्छितं** अभिलषितं । **दिशन्** स्वच्छिद्रमन्यत्र वक्ष्यन्तीति भियैव प्रयच्छन् । **तुङ्गातीरगतोऽसि** पुण्डरीकक्षेत्रात् तुङ्गायाः यत्तीरं तद्गतोऽसि प्राप्तोऽसि । यथा कश्चित् स्वदेशस्थैः स्वकृतचौर्यादिके ज्ञाते सति, ततः पलायन् स्वच्छिद्रवेत्तॄणां किञ्चित् किञ्चित् वाञ्छितं प्रयच्छन् स्वदोषगूहनायाज्ञातचरं देशं गच्छति । तद्वदयमपि उत्तरदेशे ज्ञातचेष्टः दक्षिणदेशे आगत्य तिष्ठतीति भावः । (हे विट्ठल) **यदि मे पदं** वाञ्छितं मोक्षम् । **न दास्यसि** तदा **त्वत्संस्थितिः** तव चोरत्वजारत्ववृत्तान्तः । मया **कथ्यते** । 'कथ वाक्यसन्दर्भे' इति धातोः कर्मणि लट् । अहमप्यभीष्टमोक्षदानपर्यन्तं जारोऽसि

---

१ 'विदा ज्ञानेन ठान् शून्यान् लाति गृह्णाति यः स्वयम् ।
अज्ञानुग्रहकृद्देवो विठलः कथ्यते बुधैः ॥' – इति प्रक्रियाकौमुदीप्रकाशे ।

२ नारायणो नाम नरोणां प्रसिद्धचोरः कथितस्त्रिलोक्याम् ।
अनेक जन्मार्जितपापसञ्चयं हरत्यशेषं स्मृतमात्र एव ॥ – इति कृष्णामृतमहार्णवे

त्वत्कथामेव कथयामि । मोक्षे दत्ते पुनरत्र सञ्चाराभावान्नात्र कथयामीति भावः । गोपीजनजारनवनीतचोरेति वदतां श्रीविट्ठलो वाञ्छितं ददातीति समग्रश्लोकस्य भावः। **अस्मिन् पद्ये गुरुभिरुक्तो भावो भूयांस्तिष्ठति । ग्रन्थगौरवभयान्मया न लिख्यते । विषमालङ्कारः** ।'इष्टासिद्धावनिष्टस्य भावे च विषमं मत'मिति तल्लक्षणात् ।। १३ ।।

(पम्पा)विरूपाक्षः

**पम्पाध्यक्षो विरूपाक्षः सम्पदे स्यात् सतां सदा ।**
**यो हेमगिरिसीमायां राजते राजशेखरः ।। १४ ।।**

विरूपाक्षं वर्णयति – **पम्पाध्यक्ष** इति । **पम्पाध्यक्षः** पम्पायाः अध्यक्षो अधिपतिः । **विरूपाक्षः** विरूपाक्षाख्यः शिवः । **सदा** सर्वदा । **सतां** सज्जनानाम् । **सम्पदे स्यात्** भूयात् । तस्य सम्पत्प्रदत्वं कथं घटत इत्यत आह – **य** इति । **यः राजशेखरः** राजा चन्द्रः शेखरे यस्य स तथा । 'राजा बह्नौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो'रित्यमरः । चन्द्रमौलिः शिवः । **हेमगिरिसीमायां** हेमकूटाख्यो गिरिः तस्य सीमा प्रदेशः तस्याम् । **राजते** विराजते । हेमगिरिस्थितत्वाद्राजशेखरत्वाच्च तस्य सम्पत्प्रदत्वं न दुर्घटमिति भावः ।। १४ ।।

पम्पाक्षेत्रम्

**पम्पा सम्पत्करी सेयं किं पापं न हरेन्नृणाम् ।**
**याऽधोमुखीकरोत्येतन्नामोच्चारणमात्रतः ।। १५ ।।**

पम्पाक्षेत्रं वर्णयति – **पम्पेति । नृणां सम्पत्करी सेयं पम्पा किं पापं न हरेत्** सर्वमपि पापं परिहरेदेवेत्यर्थः । **या** पम्पा । **नामोच्चारणमात्रतः** केवलं नामोच्चारणमात्रं तस्मात् केवलं पम्पेति नामोच्चारणेनैव **एतत्** पापं **अधोमुखीकरोति** अधः मुखं यस्य तदधोमुखम् । अनधोमुखमधोमुखतया सम्पद्यमानं तथाकरोति अधोमुखीकरोति । विनाशयतीत्यर्थः । सेवया किं वक्तव्यमिति भावः । पापमित्यस्य व्युत्क्रमोच्चारणे पम्पेति स्यादतः पापस्याधोमुखत्वमिति । **चमत्कारोक्तिः** ।। १५ ।।

पम्पाक्षेत्रस्थिता दुर्गा

**मालाभिः समलङ्कृताऽतिविमला लोलोल्लसल्लोचना**
**शूलेन त्रिदलेन दैत्यकलने कालायितेन द्विषः ।**
**फाले पादतलं निधाय बलिनं योन्मूलयन्ती खलं**
**बाला मे बलदाऽस्तु लोलवलया श्रीबालहम्पालया ॥ १६ ॥**

पम्पाक्षेत्रस्थितं दुर्गां वर्णयति – **मालाभिरिति** । **मालाभिः** रत्नमालाभिः पुष्पमालाभिश्च । **समलङ्कृता** सम्यगलङ्कृता **अतिविमला** अत्यन्तनिर्मला । **लोलोल्लसल्लोचना** लोलानि चञ्चलानि उल्लसन्ति लोचनानि [1]'त्रिनेत्राणि यस्याः सा तथोक्ता । **दैत्यकलने** दैत्यानां हिंसने । **कालायितेन** कालमृत्युवदाचरतीति कालायितं तेन । **त्रिदलेन** त्रीणि दलानि मुखानि यस्य तत् त्रिदलं तेन । **शूलेन** त्रिशूलेनेत्यर्थः । **द्विषः** शत्रोः महिषासुरस्य । **फाले** ललाटे । **पादतलं निधाय** पादेन शिर आक्रम्येत्यर्थः । **बलिनं** बलवन्तम् । **खलं** दुष्टं **महिषासुरं उन्मूलयन्ती या** दुर्गा । **लोलवलया** लोलानि चञ्चलानि वलयानि यस्याः सा तथोक्ता । **बाला** अनादिकालमारभ्यापि कुमारीवद्वर्तमाना । **श्रीबालहम्पालया** श्रीमती च सा बालहम्पाख्यक्षेत्रं आलयो निवासस्थानं यस्याः सा तथोक्ता । (सा) दुर्गा । **मे** मम । **बलदा** बलप्रदा । **अस्तु** ॥ १६ ॥

गजगह्वरम्

**राजधानी जयति सा गजगह्वरसञ्ज्ञिता ।**
**यत्र भान्ति गजा मध्वराद्धान्तधरणीधराः ॥ १७ ॥**

गजगह्वरं वर्णयति – **राजधानीति** । **गजगह्वरसञ्ज्ञिता** गजगह्वरं इति सञ्ज्ञा गजगह्वरसञ्ज्ञा । सा सञ्जाता अस्य इति गजगह्वरसञ्ज्ञिता । **सा राजधानी** अपभ्रष्टभाषया **आनेगोन्दीति** पुरी । राजानः धीयन्ते अस्यामिति राजधानी । **जयति** उत्कृष्टा वर्तते । गजगह्वरत्वं वर्णयति – **यत्रेति** । **यत्र** गजगह्वराख्यपुर्याम् । **मध्व-**

[1] त्रिनेत्रत्वं तु दुर्गायाः प्रायः सर्वत्र कथ्यते' – इति तन्त्रसारसङ्ग्रहे (४/६०)

**राद्धान्तधरणीधराः** मध्वराद्धान्त एव श्रीमध्वचार्यकृतसिद्धान्त एव धरणी भूमिः तां धरन्तीति तथा । धरा धरित्रीत्यमरः । मध्वसिद्धान्तधरणीधराः पद्मनाभतीर्थश्रीमच्चरणप्रभृतयः श्रीमध्वाचार्यशिष्यप्रशिष्यभूताः सन्न्यासिन एव **गजाः** । **भान्ति** शोभन्ते । 'भा दीप्तावि'ति धातुः ।। १७ ।।

**श्रीजयतीर्थाः**

**[१]माध्वग्रन्थान् स्वबन्धूनिव सरसहृदाऽऽलिङ्ग्य विज्ञातभावः ।**
**संयोज्यालङ्कृताभिः स्वसहजमतिसम्भूतवाग्भिर्वधूभिः ।**
**कृत्वाऽन्योक्तीश्च दासीर्बुधहृदयगुहं प्रौढवृत्तीश्च वृत्ती-**
**र्दत्वाऽन्योन्याभियोगं जयमुनिरसकृद्वीक्ष्य रेमे कृतार्थः ।। १८ ।।**

[२]जयतीर्थं वर्णयति – **माध्वग्रन्थानिति** । **जयमुनिः** जयतीर्थाख्यमुनिः । **माध्वग्रन्थान्** मध्वाचार्येण कृता माध्वास्ते च ग्रन्थाश्च तान् भाष्यादीन् । **स्वबन्धूनिव**

---

१ विवृतोऽयं श्लोकः छलारीसङ्कर्षणाचार्यैर्जयतीर्थविजये (५/२२-२७) –

'जयतीर्थमहाचार्यं चित्रचर्यं समार्चयत् ।
वादिराजः पुरा चारुवचनप्रसवैरिति ।।
दृष्ट्वा श्रीजयतीर्थार्यः सरसेन हृदा महान् ।
पौर्णबोधनिबन्धाग्र्यान् स्वबन्धूनिव सस्वजे ।।
ततो विज्ञातभावः संयोजयामास सूद्भवः ।
स्वटीकादारिकाग्र्याभिस्तान् निबन्धवरानसौ ।।
अत्यद्भुतस्वधीभार्याजाताभिर्ललितैः पदैः ।
लसन्तीभिर्महाभावैर्दृश्याभिः सरसैर्नृभिः ।।
प्रादायान्योक्तिकादासीर्विद्वद्धृदयमन्दिरम् ।
प्रौढवृत्तिमहावृत्तीरसौ प्रादात् तदा मुदा ।।
अन्योन्ययोगमालोक्य तेषां तासां पुनः पुनः ।
स आर परमानन्दं ततो धन्यतमो हि सः ।।'

२ अत्र 'गजगह्वरे जयतीर्थं वर्णयति' इति मुद्रितपाठः । स तु मूलकोशेषु अदर्शनात् अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च अपपाठ एव ।।

स्वगृहगतान् स्वज्ञातीनिव ग्रन्थानामाचार्यमुखकमलोद्भूतत्वात् स्वपरमगुरूणा-माचार्यकरकमलोद्भूतत्वाच्च उभयेषामेककुलोद्भूतत्वेन स्वबन्धुत्वमिति भावः । **सरस-हृदा** रसेन स्नेहेन सहितं सरसं तच्च तत् हृच्च तेन । **आलिङ्ग्य** स्वमनसा सम्यग्विचार्येत्यर्थः । **विज्ञातभावः** विज्ञातः भावः ग्रन्थाभिप्रायो येन स तथोक्तः । अन्यत्र सम्भाषणादिना विज्ञाता गमनप्रयोजनस्तथाभूतः सन् । **अलङ्कृताभिः** ओजः प्रसादमाधुर्यादिगुणैर्वृत्त्यनुप्रसादिशब्दालङ्कारैर्भूषिताभिः । **स्वसहजमतिसम्भूतवाग्भिः** स्वसहजमतिः स्वस्य सहजा स्वाभाविकी मतिः बुद्धिः तया सम्भूताभिर्वाग्भिः टीकारूपवाक्यरचनाविशेषैः टीकारचनायाः मूलग्रन्थभावबोधपूर्वकत्वादिति भावः । तद्रूपाभिः । **वधूभिः संयोज्य** सङ्गम्य दशप्रकरणभाष्यादिमूलग्रन्थानामपि बहुत्वात् तट्टीकानामपि बहुत्वादुभयत्रापि बहुवचनम् । बहूनां वराणामनेककन्याप्रदातृपुरुषवत् बहुग्रन्थटीकाकरणेन टीकाकाराणां महासाहसिकत्वदर्शनार्थं वधूवरत्वघटनार्थमेव स्वग्रन्थानामेवं स्त्रीलिङ्गपदेनोक्तिः आचार्यकृतग्रन्थानां पुल्लिङ्गपदेनोक्तिरित्यपि द्रष्टव्यम्। **अन्योक्तीः** अन्याश्च ता उक्तयश्च तास्तैस्तैर्वादिभिः कृतटीकान्तरोक्तीः । **दासीः** किङ्करीः। **कृत्वा** जयतीर्थकृतटीकावाक्यसौन्दर्यदर्शनेन एतद्ग्रन्थावली राज्ञीव तिष्ठति । अन्यग्रन्थावली तु राजमहिष्याः दासीव तिष्ठति । अत एव दासीः कृत्वेत्युक्तम् । **बुध-हृदयगृहं** बुधानां विदुषां यद्धृदयं तदेव गृहम् । **दत्वा** बुधेभ्यः स्वटीकां व्याख्याय तन्मनसि स्थापयित्वेत्यर्थः । **प्रौढवृत्तीः** प्रौढानामन्तःकरणवृत्तीः ज्ञानविशेषान् । **वृत्तीः** क्षेत्रादिजीवनोपायांश्च (दत्वा) प्रौढाः जयमुनिकृतटीकां सदा परिशीलयन्तीति भावः । **असकृत् अन्योन्याभियोगं** टीकामूलयोः बहुवारं परस्परसम्बन्धमित्यर्थः । **वीक्ष्य** दृष्ट्वा । **कृतार्थः** कृतकृत्यः सन् । **रेमे** । यथा गृहस्थः स्वगृहागतज्ञातिपुरुषाणामुद्वाहापेक्षारूप-मनोभावं ज्ञात्वा सम्बन्धयोग्यस्वसहोदरीपुत्रीरेव विवाह्य तासां दासीगृहक्षेत्रादिकं दत्वा वधूवरणामन्योन्यप्रेमपूर्वकसंसारं दृष्ट्वा सुखी भवति तद्वदिति भावः ।। १८ ।।

**श्रीवेङ्कटेशः**

**श्रीवेङ्कटलसच्छैलवासी दासीकृतामरः ।**
**छायया पातु मां नित्यं श्रीनिवाससुरद्रुमः ।। १९ ।।**

श्रीवेङ्कटपतिं वर्णयति – **श्रीवेङ्कटेति**। [1]**श्रीवेङ्कटलसच्छैलवासी** श्रीवेङ्कटाख्यः लसन् शैलः तस्मिन् वस्तुं शीलमस्यास्तीति तथोक्तः। **दासीकृतामरः** अदासाः दासाः सम्पद्यमानाः कृताः दासीकृताः। अभूततद्भावे च्विः। तादृशा अमराः देवाः येन स तथोक्तः। **श्रीनिवाससुरद्रुमः** श्रियः लक्ष्म्याः निवासः श्रीनिवासः। स एव सुरद्रुमः कल्पवृक्षः। **छायया** कान्त्या। 'छाया सूर्यप्रिया कान्ति'रिति वैजयन्ती। **नित्यं मां पातु** रक्षतु। सुरद्रुमोऽपि मेरुपर्वतवासी। अभीष्टदानेन दासीकृतामरश्चेति भवति ॥ १९ ॥

**दृष्ट्वा दिशि दिशि स्वीयान् दयया पालयन्निव।**
**वर्तते विश्वतश्चक्षुर्वेङ्कटे वेङ्कटेश्वरः ॥ २० ॥**

**दृष्ट्वेति**। **वेङ्कटेश्वरः** वेङ्कटाख्यपर्वतस्येश्वरः श्रीनिवासः। **दिशि दिशि** (स्थितान्)। **स्वीयान्** स्वभक्तान्। **दृष्ट्वा दयया पालयन्निव** रक्षन्निव [2]**विश्वतश्चक्षुः** सन्। **वेङ्कटे** वेङ्कटपर्वते। **वर्तते** यथा कश्चिदुच्चस्थले स्थित्वा दूरस्थितान् पश्यति तद्वदिति भावः। **उत्प्रेक्षालङ्कारः** ॥ २० ॥

**ये शङ्खचक्रोज्ज्वलबाहुयुग्माः स्वाङ्घ्रिं भजन्ते भवसिन्धुरेषः।**
**कटिप्रमाणस्त्विति वेङ्कटेशः स्फुटीकरोत्यात्मकराम्बुजातैः ॥२१॥**

**य** इति। **वेङ्कटेशः**। **ये** जनाः। **शङ्खचक्रोज्ज्वलबाहुयुग्माः** शङ्खश्च चक्रं च ताभ्यामुज्ज्वलं शोभमानं बाहुयुग्मं येषां ते तथोक्ताः सन्तः। **स्वाङ्घ्रिं** स्वपादम्। **भजन्ते**। (तेषां) जनानामेव। **एषः भवसिन्धुः** संसारसमुद्रः **कटिप्रमाणः** कटिमात्रपरिमितो भवति। **इति आत्मकराम्बुजातैः** आत्मनः स्वस्य करा एव अम्बुजा तानि तैः। **स्फुटीकरोति** स्पष्टयति। शङ्खचक्रयुक्तकराभ्यां शङ्खचक्रोज्ज्वलबाहुयुग्मा इत्यर्थः।

---

[1] सर्वपापानि वें प्राहुः कटस्तद्दाह उच्यते।
तस्माद्वेङ्कटशैलेति लोके ख्यातो भविष्यति ॥ – इति भविष्योत्तरपुराणे(१/२२०)

[2] विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। – ऋग्वेद १०/८१/३

वामकटिस्थवामकरेण भवसिन्धुः कटिप्रमाण इत्यर्थः । दक्षिणकटिस्थाधोमुखदक्षिण-हस्तेन स्वाङ्घ्रिं भजन्ते इत्यर्थः स्पष्टो भवतीति बोद्धव्यम् । यथा करपल्लवकौशलाभिज्ञः पुरुषः विवक्षितार्थं करचेष्टया दर्शयति तद्वदिति भावः ॥ २१ ॥

**प्रायोऽन्यत्र गतां श्रियं निजवशां कर्तुं मुहुः काङ्क्षितं**
**भक्तानां प्रदिशन् धनं प्रतिदिनं संसाध्य साध्यप्रियः ।**
**तत् तत्रैव पुनः सहस्रगुणितं पश्यन् घनश्यामलः**
**तेषां वेश्मसु विस्मितो *निवसति श्रीवेङ्कटेशोऽनिशम् ॥ २२ ॥**

**प्राय** इति । **घनश्यामलः** घनवत् मेघवत् श्यामलः । [१]**साध्यप्रियः** साध्यानां देवानां प्रियः । **श्रीवेङ्कटेशः प्रायः** बहुशः **अन्यत्र** भक्तगृहे । **गतां श्रियं** सम्पत्तिं लक्ष्मीं च। **निजवशां कर्तुं** 'लक्ष्मीः श्रीः कमला पद्मा पद्मावासा हरिप्रिये'ति हलायुधः । **भक्तानां मुहुः काङ्क्षितं** प्रदिशन् सन् (तेभ्यः) **प्रतिदिनं धनं** द्रविणम् । **संसाध्य** सम्पाद्य तेभ्यो धनादानेन । धनात्मिका लक्ष्मीः । स्ववशा भवतीति बुद्ध्या तेभ्यो वाञ्छितं दत्वा धनमुपायनरूपेण संसाध्येत्यर्थः । भक्ताः वेङ्कटपतिप्रार्थनया स्वेष्टलाभे सति वेङ्कटपतये धनसमर्पणं कुर्वन्तीति भावः । **तत्** धनम् । **तत्रैव** भक्तगृह एव । **पुनः सहस्रगुणितं** स्वगृहीताद्धनात् सहस्रधाऽभिवृद्धम् । **पश्यन्** वेङ्कटपतये धनसमर्पणेन स्वस्याधिक-धनाभिवृद्धिर्भवतीति भावः । **विस्मितः सन्** [२]भाग्यात्मिका लक्ष्मीः पुनः भक्तगृह एव तिष्ठतीत्याश्चर्योपेतः सन् **तेषां** भक्तानां **वेश्मसु** गृहेषु । **अनिशं** निरन्तरम् । **निवसति** निवासं करोति । श्रियं त्यक्तुमसमर्थः सन् एकैकमूर्त्या भक्तगृहे तिष्ठतीत्यर्थः । भक्ताः

---

* निवससि श्रीवेङ्कटेशानिशम् (पा.)

१ ऋजवो ब्रह्ममुख्या हि सुपर्णः शेष एव च ।
सरस्वती सुपर्णी च वारुणी साध्यनामकाः ॥ – छान्दोग्यभाष्ये

२ 'देवी भाग्यात्मिका नृणाम्' – इति म.भा.ता.निर्णये (३/७)

'वेङ्कटपतिकृपया धनसमृद्धिर्जायते' इति कृत्वा श्रीवेङ्कटपतिप्रतिमां स्वस्वगृहे पूजयन्तीति भावः ॥ २२ ॥

**आरूढगरुडस्कन्धमालिङ्गितरमाधरम् ।**
**आनमज्जनसर्वस्वमाश्रये वेङ्कटेश्वरम् ॥ २३ ॥**

गरुडोत्सवे गरुडोपरि स्थितं वेङ्कटपतिं वर्णयति – **आरूढेति** । **आरूढगरुडस्कन्धं** । आरूढः गरुडस्कन्धः येन स तम् । [१] **अलिङ्गितरमाधरं** रमा च धरा च रमाधरे येन स तथोक्तस्तम् । **आनमज्जनसर्वस्वं** सम्यक् नमन्तः ये जनाः तेषां सर्वस्वं समस्तधनभूतं यद्वा आनमज्जनानां सर्वस्वं समस्तधनं तद्वदाचरतीत्यानमज्जनसर्वस्वमिति वा। **वेङ्कटेश्वरमाश्रये** ॥ २३ ॥

### शेषगिरिवर्णनम्

**कशिपूकृत्य यं शेते गिरीकृत्याधितिष्ठति ।**
**अवतीर्णोऽनुजीकृत्य स तद्भक्ताग्रणीः फणी ॥ २४ ॥**

शेषगिरिं वर्णयति – **कशिपूकृत्येति** । (श्रीनिवासः) **यं कशिपूकृत्य** तल्पीकृत्य अकशिपुः कशिपुः सम्पद्यते तं तथाकृत्वा **शेते** । शेषशायित्वादिति भावः । (यं) शेषं **गिरीकृत्य** अगिरिः गिरिः सम्पद्यते तं तथाकृत्वा वेङ्कटगिरीकृत्य **अधितिष्ठति** (यं) शेषं **अनुजीकृत्य** अननुजः अनुजः सम्पद्यते तं तथा कृत्वाऽनुजीकृत्य । **अवतीर्णः** लक्ष्मणमनुजीकृत्य श्रीरामरूपेणावतीर्ण इत्यर्थः । **फणी** फणा अस्य सन्तीति फणी **स** शेषः । **तद्भक्ताग्रणीः** तद्भक्तानां वेङ्कटपतिभक्तानामग्रणीः श्रेष्ठः ॥ २४ ॥

### श्रीवेङ्कटेशस्तोत्रम्

**शङ्करविशशिमुख्याः किङ्करपदवीमुपाश्रिता यस्य ।**
**वेङ्कटगिरिनाथोऽसौ पङ्कजनयनः परात्परो जयति ॥ २५ ॥**

**शङ्करेति** । **शङ्कररविशशिमुख्याः** शङ्करः शिवश्च रविः सूर्यश्च शशी चन्द्रश्च ते मुख्याः प्रधानाः येषां ते तथोक्ताः । (देवाः) **यस्य** वेङ्कटेशस्य **किङ्करपदवीं** किङ्कराणां

मार्ग भृत्यत्वमित्यर्थः । **उपाश्रिताः** [१] संश्रिताः । **परात्** उत्तमात् ब्रह्मादिजगतः । [२] **परः** उत्तमः **पङ्कजनयनः** पङ्कजवत् पद्मवत् नयने यस्य स तथा । **असौ वेङ्कटगिरिनाथः** वेङ्कटाख्यो गिरिस्तस्य नाथः श्रीनिवासः । **जयति** उत्कृष्टो वर्तते ॥ २५ ॥

**श्रीवेङ्कटगिरिद्रोणी क्षोणी यस्यानणीयसी ।**
**तं वरेण्यं सुराग्रण्यं वेदगम्यं भजामहे ॥ २६ ॥**

**श्रीवेङ्कटेति** । **यस्य** वेङ्कटेशस्य । **अनणीयसी** अतिसूक्ष्मा न भवतीत्यनणीयसी अत्यन्तमुच्छ्रितेत्यर्थः । **श्रीवेङ्कटगिरिद्रोणी** श्रिया युक्तः वेङ्कटगिरिः तस्य द्रोणी निम्नभूता। **क्षोणी** मही निवासस्थानम् । **वरेण्यं** श्रेष्ठम् । **सुराग्रण्यं** सुराणामग्रं सुरसेनाग्रं तन्नयतीति सुराग्रणीस्तम् । प्रधानत्वेन सुरसेनाग्रनेतारम् । **वेदगम्यं** वेदैर्ज्ञेयम् । **तं** वेङ्कटपतिं **भजामहे** । **अनुप्रासः शब्दालङ्कारः** ॥ २६ ॥

**श्रीवेङ्कटपते दीनगते रम्याकृते क्षितौ ।**
**समः समस्तमर्त्यार्तिप्रमर्दन किमस्ति ते ॥ २७ ॥**

**श्रीवेङ्कटपत** इति । **दीनगते** दीनानां दारिद्र्यादिना दुःखितानां गतिराश्रयस्तस्य सम्बुद्धिः । **रम्याकृते समस्तमर्त्यार्तिप्रमर्दन** समस्ता ये मर्त्यास्तेषामर्तिः क्लेशः तस्याः प्रमर्दनः विनाशकरस्तस्य सम्बुद्धिः । **हे श्रीवेङ्कटपते क्षितौ** भूमौ **ते समः अस्ति किं** नास्तीत्यर्थः । पूर्वार्धे [३] वैदर्भीरीतिः । उत्तरार्धे [४] गौडीरीतिः ॥ २७ ॥

---

१ कलत्रं कमला यस्य पुत्रः कमलसम्भवः ।
**शिवायाः सेवकास्तस्मै** नमो विश्वकुटुम्बिने ॥ – इति विष्णुतत्त्वनिर्णयटीकायाम्

२ वेङ्कटेशसमो देवो न भूतो न भविष्यति ॥ – ब्रह्माण्डपुराणे

३ माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा **वैदर्भी** रीतिरिष्यते ॥ –इति साहित्यदर्पणे

४ ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ।
समासबाहुला **गौडी** ............... ॥ – इति साहित्यदर्पणे

**समस्तसुजनाधारं दोषदूरं गुणाकरम् ।**
**[१]श्रीवेङ्कटाचलावासं श्रीनिवासं भजेऽनिशम् ॥ २८ ॥**

**समस्तेति । समस्तसुजनाधारं** समस्ताः ये सुजनाः तेषामाधारस्तम् । **दोषदूरं** दोषाणां दूरस्तं निर्दोषमित्यर्थः । **गुणाकरं** गुणानामाकरः आश्रयस्तम् । **श्रीवेङ्कटाचलावासं** श्रीवेङ्कटाचले आवासो यस्य तम् । **श्रीनिवासमनिशं भजे** ॥ २८ ॥

**[२]आनंदतीर्थवरदे दानवारण्यापावके ।**
**ज्ञानदायिनि सर्वेशे श्रीनिवासेऽस्तु मे मनः ॥ २९ ॥**

---

१ अरायि काणे विकटे गिरिं गच्छ सदान्वे ।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥ – इति ऋग्वेदे (१०/१५५/१)

२ आनन्दरूपस्य परस्य पात्रधीरानन्दसन्दायिसुशास्त्रकृत् स यत् ।
आनन्दतीर्थेति पदं गुरूदितं बभूव तस्यात्यनुरूपरूपकम् ॥ – इति सुमध्वविजये (५/२)

आनन्दाय तीर्थं शास्त्रमस्येत्यानन्दतीर्थः । आनन्देन विष्णुना शुद्ध इति वा ।
– इति सुमध्वविजभावप्रकाशिकायाम् (५/२)

आनन्दतीर्थपरानन्दवरद । – द्वादशस्तोत्रे

मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थः स्यात् तृतीया मारुतीतनुः ॥–इति छान्दोग्योपनिषद्भाष्योद्धृतभाववृत्ते(सद्भावे)

त्वं चापि गच्छ शैलेन्द्र पूर्वं स्वर्णमुखीतटे ।
यत्र ब्रह्मशिला नाम सरिन्मध्ये च वर्तते ॥
अगस्त्यतपसा पश्चाद्भूयासान्निध्यमत्र वै ।
पादा ईशानविष्ण्वादिदेवानां तत्र सन्ति हि ॥
यतिरूपो मातरिश्वाऽष्टविंशतिमे कलौ ।
अवतीर्य वसत्यत्र मध्वनामा वरं विभोः ॥
अवाप तपसा पुण्यः प्रीत्या चागस्त्ययोगिनः ।
तत्स्थापितालये पुण्ये चातुर्मास्यं करिष्यति ॥
शुकः श्रोष्यति सच्छास्त्रं पद्मतीर्थादिहागतः ॥
– इति श्रीविजयीन्द्रतीर्थश्रीपादोद्धृतब्रह्मपुराण (क्षेत्रकाण्डे वेङ्कटगिरिमाहात्म्ये तृतीयेऽध्याये शङ्खलिखितसंवादे)वचनम् (मध्वाध्वकण्टकोद्धारे)

**आनन्दतीर्थेति**। **आनन्दतीर्थवरदे** अनन्दकरं तीर्थं शास्त्रं यस्मात् स आनन्दतीर्थः श्रीमध्वाचार्यः तस्य यो वरः ईप्सितार्थस्तं ददातीति तथोक्तस्तस्मिन्। **दानवारण्यपावके** दानवा एवारण्यं तस्य पावक इव तस्मिन् राक्षससंहर्तरीत्यर्थः। **ज्ञानदायिनि** ज्ञानं दातुं शीलमस्यास्तीति ज्ञानदायी, तस्मिन् **सर्वेशे** सर्वेषामीशः स्वामी तस्मिन्। **श्रीनिवासे मे मनः** चित्तं **अस्तु**॥ २९॥

### [१]सुवर्णमुखी(नदी)

**सुवर्णमुखि संसेवे सुवर्णाभं पयस्तव।**
**सुवर्णशोभिवदनं कुरु मामम्ब निर्मलम्** ॥ ३०॥

सुवर्णमुखीं वर्णयति – **सुवर्णमुखीति**। **हे सुवर्णमुखि** नदि **तव सुवर्णाभं** सुवर्णस्य हेम्नः आभेव आभा यस्य तद्वत् पीतमित्यर्थः। **पयः** जलं **संसेवे** 'सेवृ सेवाया'मिति धातोर्लट्। **हे अम्ब** मातः **सुवर्णमुखि मां सुवर्णशोभिवदनं** सुवर्णैः

---

* धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये।
आयान्ति सर्वतीर्थानि स्वामिपुष्करणी जले॥ – भविष्योत्तरपुराणे(३/४)

वेङ्कटाचलसम्भूते सर्वतीर्थसमन्विते।
स्वामिपुष्करणि ख्याते गृहाणार्घ्यं नमोऽस्तु ते॥ – इति स्वामिपुष्करण्यर्घ्यमन्त्रः

अञ्जनाद्रिः वृषाद्रिश्च शेषाद्रिर्गरुडाचलः।
तीर्थाद्रिः श्रीनिवासाद्रिः चिन्तामणिगिरिस्तथा॥
वृषभाद्रिर्वराहाद्रिर्ज्ञानाद्रिः कनकाचलः।
आनन्दाद्रिश्च नीलाद्रिः सुमेरुशिखराचलः॥
वैकुण्ठाद्रिः पुष्कराद्रिः इति नामानि विंशतिः॥ – ब्रह्माण्डपुराणे (तीर्थखण्डे १/२१-२३)

१ सुवर्णामिव लोकानां भागधेयादियं नदी।
नीता भुवमगस्त्येन मुखरीकृतदिङ्मुखा॥
तस्माद्यास्यति विख्यातिं सर्वलोकाभिवन्दिता।
सुवर्णमुखरी नाम्ना धाम्ना कैवल्यसम्पदः॥
एषा सुवर्णमुखरी सरित्सु सकलास्वपि।
विशिष्टा सेवनीया च ब्रह्मणो वचनं त्विदम्॥ – इति स्कन्दपुराणे

शोभनाश्च ते वर्णाश्च सुवर्णाः तैः कृष्णरामेत्यादिहरिनामाक्षरैः । ''वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षर' इत्यमरः । शोभि शोभावद्वदनं मुखं यस्य स तथा तम् । अत एव **निर्मलं** शुद्धान्तःकरणं **कुरु** ॥ ३० ॥

**काञ्चीवरदराजः**

**रम्यो वरदराजोऽयं रसिकाग्रेसरो ध्रुवम् ।**
**कथमात्मवधूश्लाघ्यकाञ्चीदेशे न चेद्वसेत्** ॥ ३१ ॥

काञ्चीवरदराजं वर्णयति – **रम्य** इति । **रम्यः** रमणीयः **अयं वरदराजः** वरं ददातीति वरदाः ब्रह्मादिदेवास्तेषां राजा प्रभुः । **रसिकाग्रेसरः** रसिकेषु श्रुङ्गाररसवत्सु नायकेषु अग्रेसरः श्रेष्ठो भवति । **ध्रुवं** निश्चयः । **न चेत्** रसिकाग्रेसरो न भवति चेत् **आत्मवधूश्लाघ्यकाञ्चीदेशे** आत्मनः स्वस्य वधूः भूमिस्तस्याः श्लाघ्यः यः काञ्चीदेशः काञ्च्याख्यप्रदेशः तस्मिन् । नितम्ब इति ध्वनिः । **कथं वसेत्** । तस्मात् सदा आत्मवधूश्लाघ्यकाञ्चीदेशस्थितत्वाद्रसिकाग्रेसरो भवति । वध्वाः समीप वास्यपि रसिक इत्युच्यते। अयं तु वधूकाञ्चीदेशवासित्वाद्रसिकाग्रेसर इति भावः । **उत्प्रेक्षालङ्कारः** ॥ ३१ ॥

**याचे वरदराज त्वां काञ्चीशेह न किञ्चन ।**
**चेतनाचेतनजगद्वरं त्वामेव देहि मे** ॥ ३२ ॥

इदानीमैहिकामुष्मिकफलानपेक्षिणामेकान्तभक्तानामपि काञ्चीपतेर्वरदराजत्वमुपपादयन् विभावनालङ्कारेण तमेव स्तौति । **याच** इति । हे **काञ्चीश** [१]**वरदराज इह** संसारे **किञ्चन** अर्थादिकं **त्वां न याचे** । (किन्तु) **चेतनाचेतनजगद्वरं** चेतनाश्चाचेतनाश्च चेतनाचेतनास्तेभ्यः जगद्भ्यः वरं श्रेष्ठं **त्वामेव** [२]**मे** मह्यं **देहि** । अस्मान् प्रति लौकिकवरदायकत्वेन वरदराजत्वासम्भवेऽपि वरदशब्दस्य श्रेष्ठवाचकत्वादेकान्त-

---

१ वन्दे वन्द्यं सदानन्दं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादिवरदेशवरप्रदम् ॥ – द्वादशस्तोत्रे (१/१)

२ 'एकान्तानां न कस्यचित् । अर्थे नारायणो देवः' – इति गीतातात्पर्ये (७/२९)

भक्तानामपि त्वदपेक्षायाः सम्भवादुक्तविधया त्वामेव दत्वा वरदराजत्वं सम्पादयेति भावः । **श्लिष्टगर्भितविभावनालङ्कारः** ।। ३२ ।।

**द्विजेष्टदातृत्वमजार्चितत्वमजन्मतां स्वां मखभोक्तृतां च ।**
**व्यनक्त्ययं श्रीपतिरग्रहारपरीतधातृक्रतुवेदिजातः ।। ३३ ।।**

**द्विजेति** । **द्विजेष्टदातृत्वं** द्विजानां यदिष्टं तस्य दाता तस्य भावस्तत्वं तत् । **अजार्चितत्वं** अजेन ब्रह्मणा अर्चितः पूजितस्तस्य भावस्तत्वं तत् । **अजन्मतां** न विद्यते जन्म यस्य स अजन्मा । तस्य भावस्तत्ता तां योनिमुखादुत्पत्त्यभावमित्यर्थः । **स्वां** स्वकीयां **मखभोक्तृतां च** मखानां यज्ञानां भोक्ता तस्य भावस्तत्ता त्वां च । **अग्रहारपरीतधातृक्रतुवेदिजातः** अग्रहारैर्ब्राह्मणग्रामैः परितः इता प्राप्ता परीता । सा च सा धातृक्रतुवेदिः चतुर्मुखेन क्रियमाणाश्वमेधयज्ञे परिष्कृता वेदिर्भूमिरित्यर्थः । 'वेदिः परिष्कृता भूमि'रित्यमरः । तस्यां जातः प्रादुर्भूतः । **अयं श्रीपतिः** वरदराजः **व्यनक्ति** गम्यति । 'विपूर्वादञ्जूव्यक्तिम्रक्षणकान्तिगतिष्वि'ति धातोर्लट् । अग्रहारपरितेत्यनेन द्विजेष्टदातृत्वं धातृक्रत्वित्यनेन अजार्चितत्वं मखभोक्तृत्वं च वेदिजात इत्यनेन जननराहित्यं च अभिव्यज्यत इति बोद्धव्यम् ।। ३३ ।।

### एकाम्रेश्वरः

**कन्तुरम्यशराक्रान्तस्वान्तं मत्वेव पार्वती ।**
**आम्रमूले स्थितं शम्भुमालिङ्ग्यास्ते शुचिस्मिता ।। ३४ ।।**

एकाम्रनाथं वर्णयति – **कन्त्विति** । **शुचिस्मिता** शुचि मनोहरं स्मितं यस्याः सा तथोक्ता । **पार्वती आम्रमूले** आम्रस्य चूतवृक्षस्य मूलं तस्मिन् । **स्थितं शम्भुं** स्वकान्तं शिवम् । **कन्तुरम्यशराक्रान्तस्वान्तं** कन्तोः कामस्य 'कन्तुः कामो मनोहर' इति केशवः । यः रम्यः हरः चूतरूपमनोहरबाणस्तेनाक्रान्तं विद्धं स्वान्तं हृदयं यस्य स तथोक्तस्तम् । **मत्वेव** ज्ञात्वेव । आम्रस्य कामशरत्वादिति भावः । **आलिङ्ग्य** हृदय-लग्नशरोद्धरणायाश्लिष्य **आस्ते** तिष्ठति । अङ्गनालिङ्गनेन अनङ्गजबाधानिवृत्तिर्भवतीति

भावः । शिवकाञ्चीलिङ्गस्य मध्यं पार्वत्यालिङ्गनवशादीषत्सूक्ष्ममिति **प्रथा** । लिङ्गस्य पृष्ठभागे दैविकश्चूतवृक्षोऽपि तिष्ठति । तस्मादत्रैवालिङ्गने **कारणोत्प्रेक्षेयम्** ॥ ३४ ॥

**कामाक्षी**

**प्रपद्ये तव कामाक्षि चरणौ शरणं सदा ।**
**यत्सौन्दर्यांबुधिं द्रष्टुं त्रिनेत्रोऽभून्महेश्वरः ॥ ३५ ॥**

कामाक्षीं वर्णयति – **प्रपद्य** इति । हे **कामाक्षी** कामप्रदे अक्षिणी यस्याः सा तथोक्ता तत्सम्बुद्धिः । हे पार्वति **तव चरणौ सदा शरणं प्रपद्ये** गच्छामि । 'पदॢ गतावि'ति धातोर्लट् । **महेश्वरः** महांश्चासौ ईश्वरश्च महेश्वरः शिवः । **यत्सौन्दर्याम्बुधिं** यस्याः कामाक्ष्याः सौन्दर्यं तदेवाम्बुधिः तं **द्रष्टुं त्रिनेत्रः** त्रीणि नेत्राणि यस्य स त्रिनेत्रः **अभूत्** । सौन्दर्यं द्रष्टुं लोचनद्वयं नालमिति त्रिनेत्रोऽभवदिति भावः । तादृशसौन्दर्यवती कामाक्षीति तात्पर्यम् । **उत्प्रेक्षालङ्कारः** । व्यञ्जनकाभावेऽप्युत्प्रेक्षा गम्यते ॥ ३५ ॥

**उत्पादयंस्त्वयि सुतौ गिरिजे गिरीशः**
**सौन्दर्यभङ्गजभियेव भवो भवत्याः ।**
**कामाक्षि विघ्नहरमेकमसावकार्षीत्**
**षाण्मातुरं त्वपरमङ्गजभञ्जकोऽपि ॥ ३६ ॥**

**उत्पादयन्निति** । हे **गिरिजे** गिरेर्हिमवत्पर्वताज्जातेति गिरिजा, तत्सम्बुद्धिः । हे **कामाक्षि** । **गिरिशः** गिरेः कैलासपर्वतस्य ईशः स्वामी । **असौ भवः** शिवः । **अङ्गज-भञ्जकोऽपि** अङ्गजः कामः तस्य भञ्जको विनाशकस्तथाऽपि मन्मथहन्ताऽपीत्यर्थः। **त्वयि सुतौ** द्वौ पुत्रौ **उत्पादयन् भवत्याः** कान्तायास्तव । **सौन्दर्यभङ्गजभियेव** सौन्दर्यस्य लावण्यस्य यो भङ्गो नाशस्तस्माज्जातेति सौन्दर्यभङ्गजा सा च सा भीश्च तयेव । 'प्रसवान्तं हि यौवन'मिति न्यायात् तारुण्यनिमित्तकलावण्यनाशजन्मभयेनेव। **एकं** पुत्रं **विघ्नहरं** विघ्नान् हरतीति विघ्नहरः तं विघ्नहरम् । **अकार्षीत्** अकरोत् । सर्वस्य विघ्नहर्ता स्वमातृयौवनस्य विघ्नं परिहरिष्यतीति बुद्ध्या विघ्नहरनामानमकरोदिति भावः ।

**अपरं** तु अन्यं पुत्रं तु **षाण्मातुरं** षण्णां मातॄणामपत्यं पुमान् षाण्मातुरः तम् । [१]'मातुरुत्सङ्ख्यासम्भद्रपूर्वाया' इत्यपत्यार्थे अणप्रत्ययः उकारश्चान्तादेशः । [२]'उरण् रपर' इतिरपरत्वं [३]'तद्धितार्थोत्तरपदसमाहारे चे'ति समासः। **अकार्षीत्** अकरोत् । 'डुकृञ् करण' इति धातेर्लुङ् । [४]'सिचि वृद्धिः । स्तन्यपानेन स्थनशैथिल्ये सौन्दर्यहानिर्भविष्यतीति भियेव तस्योपमातॄः प्रकल्प्य षाण्मातुरमकरोदिति भावः । 'षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः' इत्यमरः । विरक्तस्यापि शिवस्य रागजनयित्र्याः कामाक्ष्याः सौन्दर्यातिशयः कथं कथनीय इति भावः । **अतिशयोक्तिरलङ्कारः** ॥ ३६ ॥

### अरुणाचलेश्वरः (तिरुवण्णामलै)

**फणिगणवरभूषः पार्वतीश्लाघ्यवेषः**
**खलजनकृतरोषः खण्डितात्मीयदोषः ।**
**सदरुणगिरिवासः शक्रसूर्याद्यधीशः**
**परिहृतभवपाशः पातु मां पार्वतीशः ॥ ३७ ॥**

अरुणगिरिनाथं वर्णयति – **फणिगणेति** । **फणिगणवरभूषः** फणिनां सर्पानां गणः । स एव वरा उत्तमा भूषा भूषणं यस्य स तथोक्तः । **पार्वतीश्लाघ्यवेषः** पार्वत्या श्लाघ्यः काम्यः वेषः आकारो यस्य स तथोक्तः । **खलजनकृतरोषः** खलजनाः दुष्टजनाः तेषु कृतः रोषो येन स तथोक्तः । **खण्डितात्मीयदोषः** खण्डिताः छिन्नाः आत्मीयेषु दोषाः येन स तथोक्तः । **शक्रसूर्याद्यधीशः** शक्रश्च सूर्यश्च तावेव आदी येषां ते शक्रसूर्यादयस्तेषामीशः स्वामी । **परिहृतभवपाशः** परिहृतः भव एव संसार एव पाशो

---

१ 'मातुरुसङ्ख्यासम्भद्रपूर्वायाः' – पा.सू. (४/१/११५)

२ 'उरण् रपरः' – पा.सू. (१/१/५१)

३ 'तद्धितार्थोत्तरपदसमाहारे च' – पा.सू. (२/१/५१)

४ 'सिचि वृद्धिः परस्मैपदेषु' – पा.सू.( ७/२/१)

तेन स तथोक्तः । ज्ञानोपदेष्टृत्वादिति भावः । **सदरुणगिरिवासः** सन् उत्तमः यः अरुणगिरिः अरुणाख्यपर्वतस्तस्मिन् वासोऽवस्थानं यस्य स तथोक्तः । **पार्वतीशः** पार्वत्या उमायाः ईशः भर्ता शिवः **मां पातु** रक्षतु । 'पा रक्षण' इति धातोर्लोट् ।। ३७ ।।

**पिनाकिनीतीरस्थः त्रिविक्रमः(तिरुक्कोयिलूरु)**

**त्रिविक्रम न विक्रमं गणयितुं फणी शक्नुते**
**तवेश नतवेपथुप्रशमनं परे किं पुनः ।**
**अजाण्डघनभाण्डखण्डनपटीयसी यन्मृदु-**
**प्रदीप्तनिगमोक्तपन्नखशिखा जगद्व्यापिनी ।। ३८ ।।**

पिनाकिनीतीरस्थं [१]त्रिविक्रमं वर्णयति – **त्रिविक्रमेति** । हे **ईश** स्वामिन्! **त्रिविक्रम** । **नतवेपथुप्रशमनं** नतानां नमस्कृतानां यो वेपथुः कम्पः तस्य भयस्येत्यर्थः । प्रशमनं विनाशः येन स तथा तम् । **तव विक्रमं** पराक्रमं **गणयितुं** सङ्ख्यातुम् । [२]**फणी** सहस्रवदनः शेषः **न शक्नुते** न समर्थो भवति । **परे** शेषादन्ये न शक्नुवन्तीति **किं** [३]**पुनः** किं वक्तव्यमित्यर्थः । तत्र एकं पराक्रमं वर्णयति – अजाण्डेत्यादिना । **जगद्व्यापिनी** जगद्ब्रह्माण्डं व्याप्तुं शीलमस्येति जगद्व्यापिनी । **यन्मृदुप्रदीप्तनिगमोक्तपन्नखशिखा** यस्य त्रिविक्रमस्य मृदुः कोमलः स चासौ प्रदीप्तश्च प्रकृष्टकान्तियुक्तः स चासौ निगमोक्तिश्च [४]'त्रीणि पदा विचक्रमे', [५]'विचक्रमे पृथिवीमेष एता'मित्यादिवेदः तेनोक्तः स चासौ पच्च पादश्च तस्य यो नखस्तस्य शिखा अग्रम् । **अजाण्डघनभाण्ड-खण्डनपटीयसी** । अजाण्डं ब्रह्माण्डं तदेव घनभाण्डं दृढमृण्मयपात्रविशेषस्तस्य खण्डनं

---

१ वेदान् कालान् गुणान् लोकान् देवमानुषदानवान् ।
चेतनाचेतनान् मिश्रान् त्रीणि पदा विचक्रमे ।।
रक्षकत्वेन सर्वाणि स्रष्टृभर्तृत्वतस्तथा ।
मोक्षदत्वेन च विभुः स्तम्भनीयो न केनचित् ।
धारकांश्चैव वाय्वादीन् धारयन् वर्तते ततः ।। – ऋग्भाष्ये (२/३५-३६)

२ गायन् गुणान् दशशतानन आदिदेवः
शेषोऽधुनाऽपि समवस्यति नास्य पारम् । – इति भागवते (२/७/४१)

विभेदनं तस्मिन् पटीयसी अतिसमर्था । अतः त्रिविक्रमस्य विक्रमं वक्तुं न समर्थ इत्यर्थः ॥ ३८ ॥

### वृद्धाचलेशः

**वृद्धाचलकृतावासः सद्योजातस्त्रिलोचनः ।**
**अद्यैव ज्ञाननयनं वर्धयत्वचलं मयि ॥ ३९ ॥**

वृद्धाचलेशं वर्णयति – **वृद्धाचलेति** । **वृद्धाचलकृतावासः** वृद्धाः चलाख्यो यो अचलस्तस्मिन् कृतः आवासो येन स तथोक्तः । **सद्योजातः** सद्योजाताख्यः **त्रिलोचनः** शिवः । **अद्यैव** अधुनैव । **मयि अचलं** नित्यम् । **ज्ञाननयनं वर्धयतु** पूर्वार्धोक्तपदचतुष्टयेन उत्तरार्धोक्तपदार्थचतुष्टयसूचनं यथायोग्यं द्रष्टव्यम् ॥ ३९ ॥

---

[३] नान्तं विदाम्यहममी मुनयोऽग्रजास्ते ।
मायाबलस्य पुरुषस्य कुतोऽवरा ये ॥ – इति भागवते (२/७/४१)

नैवोदापुर्गृणन्तोऽन्तं यद्गुणानामजादयः ॥ – इति द्वादशस्तोत्रे (१/१२)

विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि। –भागवते(२/७/४०)

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ – इति ऋग्वेदे (१/१५४)

ब्रह्मेशानादिभिस्सर्वैः समेतैर्यद्गुणांशकः ।
नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा ॥ – इति म.भा.ता.निर्णये *(२/११४)॥

गणयेद्रमाऽस्य न गुणानखिलांश्चतुराननश्चतुरावागपि नो ।
न वयं सहस्रवदना अपि तानपरोदितानतिवदेम पुनः ॥ – इति सुमध्वविजये (११/१९)

[४] ऋग्वेदे (१/२२/१८) [५] ऋग्वेदे (७/१००/४);

पाषण्डशास्त्रकृद्दोषपरिहाराय धूर्जटिः ।
क्षेत्रादस्मान्महापुण्यं किञ्चिद्वायव्यकोणके ।
**वृद्धाचलमिति** ख्यातं काश्या अप्यधिकं महत् ।
वस तत्र सदा पश्यन् श्रीमुष्णं क्षेत्रमुत्तमम् ।
तपश्चर महाभाग हृदि मामेव भावयन् ॥ – वराहपुराणे (श्रीमुष्णमाहात्म्ये)

**हराय भजकानिष्टहराय पुरवैरिणे।**
**भवाय भवते भूयाच्छिवाय शिरसा नमः ॥ ४० ॥**

**हरायेति।** **हराय** हरतीति हरस्तस्मै दुर्जनेष्टहर्त्रे इत्यर्थः। **भजकानिष्टहराय** भजकानां यदनिष्टं तद्धरतीति भजकानिष्टहरस्तस्मै। **पुरवैरिणे** पुराणां त्रिपुराणां वैरी तस्मै। **शिवाय** मङ्गलाय। **भवाय** श्रीमहादेवाय। **भवते** तुभ्यम्। **शिरसा नमः** नमनं **भूयात्** ॥ ४० ॥

श्रीमुष्णश्वेतवराहः[१]

**वराह वरदंष्ट्रया कुटिलया कठोरं रिपुं**
**विदार्य सुरधुर्य गां निजपदारविन्दानुगाम्।**
**उपेत्य सुखचित्तनुः सरसलीलयाऽऽलिङ्ग्य तां**
**सिताङ्ग जगतां गते विहरसीह पुण्यस्थले ॥ ४१ ॥**

श्रीमुष्णश्वेतवराहं वर्णयति – **वराहेति।** **सिताङ्ग** सितं शुभ्रं अङ्गं यस्य स तथा तत्सम्बुद्धिः। **जगतां गते।** **सुरधुर्य** सुरेषु धुर्य श्रेष्ठ। **हे वराह।** **कुटिलया** वक्रया। **वरदंष्ट्रया** उत्तमदन्तेन। **कठोरं** तीक्ष्णम्। **रिपुं** हिरण्याक्षं **विदार्य** भित्वा **सुखचित्तनुः** सुखं च चित् ज्ञानं सा च ते तनुर्यस्य स तथा। (त्वं) **निजपदारविन्दानुगां** निजे स्वीये पदे पादौ त एव अरविन्दे तयोरनुगां भृत्यां **गां** भूमिं **उपेत्य।** **सरसलीलया** रसेन विलासेन सहिता सरसा सा च सा लीला च तया। **तां** भूमिं **आलिङ्ग्य इह पुण्यस्थले** पुण्यक्षेत्रे **विहरसि** क्रीडां करोति ॥ ४१ ॥

कुम्भघोणस्थः शार्ङ्गपाणिः

**कुम्भघोणे वस श्रीश शार्ङ्गमाच्छादय प्रभो।**
**तथाऽप्यतुललावण्यैर्जनास्त्वां जानतेऽच्युतम् ॥ ४२ ॥**

---

१ दुष्टश्रियायुःकीर्त्यादिर्मोक्षाणामत्र वै भुवि।
**श्रीमुष्णमिति** चाख्या हि क्षेत्रस्यास्य भविष्यति ॥ – वराहपुराणे (श्रीमुष्णमाहात्म्ये)

[1]कुम्भघोणस्थं शार्ङ्गपाणिं वर्णयति – **कुम्भघोण** इति। **हे प्रभो** समर्थ। **श्रीश** लक्ष्मीपते (त्वं) **कुम्भघोणे** कुम्भघोणाख्यक्षेत्रे। रूपमाच्छादयितुं घटान्तःप्रदेशप्रविष्ट इति **ध्वनिः**। **वस** तिष्ठ। **शार्ङ्गमाच्छादय** शार्ङ्गमधःकृत्वा तदुपरि शयनेनासाधारणा-युधस्य शार्ङ्गस्याच्छादनं कुरु। **तथापि**। **जनस्त्वां** [2]**अतुललावण्यैः** अतुलानि असदृशानि लावण्यानि सौन्दर्याणि तैर्लिङ्गैः **अच्युतं** श्रीनारायणं **जानते** जानन्ति। 'ज्ञा अवबोधन' इति धातोर्लट्। असदृशलावण्यस्यासाधारणत्वात् तदाच्छादनस्य कर्तुमशक्यत्वादिति भावः। अतिसुन्दरः श्रीशार्ङ्गपाणिरिति तात्पर्यार्थः॥ ४२॥

**हृतभूभारदैतेय कृतविश्वजनावन।**
**शार्ङ्गपाणे शराणां ते लक्ष्यं पापानि मेऽधुना ॥ ४३ ॥**

**॥ इति श्रीमद्वादिराजतीर्थचरणकृततीर्थप्रबन्धे पूर्वप्रबन्धः ॥**

**हृतेति**। **हृतभूभारदैतेय** हृताः संहृताः भारायिताः दैतेयाः दैत्याः येन स तथोक्तस्तत्सम्बुद्धिः। **कृतविश्वजनावन** कृतं विश्वजनस्य अवनं रक्षणं येन स तथोक्तस्तत्सम्बुद्धिः। कृतायुधप्रयोजनेति भावः। **हे शार्ङ्गपाणे अधुना ते** तव **शराणां लक्ष्यं** शरव्यम्। 'लक्ष्यं लक्षं शरव्यं चे'त्यमरः। **मे** मम **पापानि**। शरव्यभूतदैत्यहननस्य प्रागेव जातत्वाच्छरव्यतांतराभावान्मत्पापेष्वेव शरं मुञ्चेति भावः। पापपरिहारं कुर्विति तात्पर्यम्॥ ४३॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिततीर्थप्रबन्धस्य टीकायां लक्ष्मीपतिभट्टोपाध्यायसूनुनारायणाचार्येण कृतायां गुरुभावप्रकाशिकायां पूर्वप्रबन्धः॥ ३॥**

******

---

१ कुम्भस्य घोणतो यस्मात् सुधापूरं विनिःसृतम्।
तस्मात् तु तत्पदं लोके कुम्भघोणं वदन्ति ह॥ – पुराणवचनम्

२ साक्षान्मन्मथमन्मथः। – भागवते (गोपीगीतायाम्)

# दक्षिणप्रबन्धः

## रङ्गनाथः

**कावेरीहृदये वसन् कमलभूतातः कृपावीक्षणैः**
**जीवांहः शमयन् श्रिया च धरया सेव्योऽतिभाव्यो विभुः ।**
**देवैरावरणस्थितैः कृतनतिः शेषाङ्गशायी सदा**
**भावे मे विधुपुष्करण्यधिपतिः श्रीरङ्गनाथोऽस्त्वयम्   ॥ १ ॥**

श्रीवादिराजकविताकावेरीहृदयास्पदम् ।
तदन्तरङ्गधामानं वाजिवक्त्रं नतोऽस्म्यहम् ॥

[१]श्रीरङ्गनाथं वर्णयति – **कावेरीति** । **कावेरीहृदये** कावेर्योरुभयोः कावेर्योः हृदयं मध्यं तस्मिन् । **वसन्** निवसन् । **कमलभूतातः** कमलाद्भवतीति कमलभूः ब्रह्मा । तस्य तातः पिता । 'तातोऽनुकम्प्ये पितरी'ति रत्नमाला । **कृपावीक्षणैः** कृपाप्रधानानि वीक्षणानि तैः । शाकपार्थिवादिवन्मध्यमपदलोपिसमासः । **जीवांहः** जीवानां पापम् । **शमयन्** परिहरन् । **श्रिया** लक्ष्म्या । **धरया** भूम्या च । **सेव्यः** । **अतिभाव्यः** अत्यन्त-मनोहरः । **विभुः** समर्थः । **आवरणस्थितैः** आवरणे स्थिताः आवरणस्थिताः तैः । परिवारतया परितः स्थितैरित्यर्थः । **देवैः** ब्रह्मादिभिः । **कृतनतिः** कृता नतिर्नमस्कारः यस्य स तथा । [२]'अनेकमन्यपदार्थ' इति समासः । **शेषाङ्गशायी** शेषस्य यदङ्गं तस्मिन्

---

१ आद्यं स्वयंव्यक्तमिदं विमानं रङ्गसञ्ज्ञितम् ।
श्रीमुष्णं वेङ्कटाद्रिश्च शालग्रामश्च नैमिषम् ॥
तोताद्रिः पुष्करं चैव नरनारायणाश्रमम् ।
अष्टौ मे मूर्तयः सन्ति स्वयंव्यक्ता महीतले ॥

शृङ्गाररसिन्धुं स भुजङ्गशायिनं श्रीरङ्गवासं कृतमङ्गलं सताम् ।
अमन्दधीर्देवमवन्दतागतः कवेरकन्याहिमवायुसेवितम् ॥ – इति सुमध्वविजये (५/४७)

२ 'अनेकमन्यपदार्थे' – पा.सू. (२/२/२४)

शेत इति शेषाङ्गशायी । **विधुपुष्करिण्यधिपतिः** विधोश्चन्द्रस्य या पुष्करिणी तस्या अधिपतिः स्वामी । चन्द्रपुष्करिण्याख्यतीर्थाधिपतिरित्यर्थः । **अयं श्रीरङ्गनाथः** श्रीरङ्गक्षेत्राधिपतिर्हरिः **सदा मे भावे चित्ते अस्तु** भवतु । सर्वदा मद्ध्यानगोचरो भवत्वित्यर्थः ॥ १ ॥

**श्रुतिशतपरिगीतः शुद्धभावैर्गृहीतः**
**कमलनिलयतातः कञ्जनेत्रः प्रतीतः ।**
**सकलजगदतीतः सर्वसम्पत्समेतः**
**प्रविशतु मम चेतः प्रत्यहं रङ्गनाथः ॥ २ ॥**

**श्रुतिशतेति** । **श्रुतिशतपरिगीतः** श्रुतीनां शतानि [१]अनन्तवेदा इत्यर्थः । तैः परिगीतः विशेषेण स्तुतः । **शुद्धभावैः** शुद्धान्तःकरणैः । **गृहीतः** वशीकृतः । **कमलनिलयतातः** कमलनिलयो ब्रह्मा तस्य तातः पिता । **कञ्जनेत्रः** कञ्जवत् कमलवन्नेत्रे यस्य स तथा । **प्रतीतः** प्रसिद्धः । [२]**सकलजगदतीतः** सकलानि जगन्ति तान्यतीतोऽतिक्रान्तः । [३]द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति समासः । **सर्वसम्पत्समेतः** सर्वया सम्पदा समेतः । **रङ्गनाथः** रङ्गस्य रङ्गाख्यक्षेत्रस्य नाथः । **प्रत्यहं** प्रतिदिनम् । **मम**। **चेतः** हृदयं **प्रविशतु** । काव्यैस्तवपद्यानामीदृत्त्वान्न पौनरुक्त्यादिशङ्कावकाशः ॥ २ ॥

**श्रीरङ्गनाथः सुरसिद्धगीतः कारुण्यसिन्धुः कविवर्गबन्धुः ।**
**स्मेरास्यचन्द्रः स्मरतां महेन्द्रक्ष्मारुट् प्रसन्नः क्षपयत्वघं नः ॥ ३ ॥**

---

१ ‘अनन्ता वै वेदाः’ – इति श्रुतिः ।
‘अनन्ताश्च तथा वेदाः’ इति बृहद्भाष्ये ।

२ समतीतक्षराक्षरं ... । – विष्णुतत्त्वविनिर्णये

३ ‘द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः’ – पा.सू. (२/१/२४)

**श्रीरङ्गनाथेति** । **सुरसिद्धगीतः** सुराश्च सिद्धाश्च देवयोनिभेदाः । ऋषयो वा तैर्गीतः स्तुतः । **कारुण्यसिन्धुः** कारुण्येन कृपया सिन्धुरिव । **कविवर्गबन्धुः** । कविवर्गस्य ज्ञानिसमूहस्य बन्धुः सुहृत् । **स्मेरास्यचन्द्रः** स्मेरं स्मितयुक्तं यदास्यं मुखं तदेव चन्द्रो यस्य स तथा । **स्मरतां** जनानां **महेन्द्रक्ष्मारुट्** महेन्द्रस्य पुरन्दरस्य क्ष्मारुट् कल्पवृक्ष इत्यर्थः । **प्रसन्नः श्रीरङ्गनाथः नः** अस्माकम् । **अघं** पापं **क्षपयतु** परिहरतु ॥ ३ ॥

**लये शयानोऽप्युदरस्थलोकभरेण लक्ष्मीकरविभ्रमैश्च ।**
**अनिद्रितोऽद्याङ्घ्रिनिषेवणे तां नियुज्य निद्रासि किमम्बुजाक्ष ॥ ४ ॥**

**लय** इति । हे **अम्बुजाक्ष** अम्बुजं पद्मं तद्वदक्षिणी यस्य स तत्सम्बुद्धिः । रङ्गनाथ! **लये** महाप्रलये । **शयानोऽपि** सृष्ट्यादिव्यापारं विहाय शेषपर्यङ्के शयानोऽपीत्यर्थः । **उदरस्थलोकभरेण** उदरे तिष्ठतीति उदरस्थः । स चासौ लोकश्च तस्य भरो भारः तेन । **लक्ष्म्याः करविभ्रमैश्च** हस्तविलासैश्च । **अनिद्रितः** निद्रा सञ्जाता अस्येति निद्रितः स न भवतीत्यनिद्रितः । निद्राक्षयं प्रापित इत्यर्थः । (त्वं) **अद्य** अधुना उदरस्थलोकान् बहिः कृत्वा । **तां** लक्ष्मीं **अङ्घ्रिनिषेवणे** पादसेवने । अङ्घ्रिनिषेवण इत्युपलक्षणम् । पाकादौ चेत्यादि द्रष्टव्यम् । **नियुज्य निद्रासि किं** निद्रां करोषि किम् । श्रीरङ्गनाथस्य शेषशायित्वादियमुत्प्रेक्षा ॥ ४ ॥

**निजाङ्घ्रिसेवानिरतान् मनुष्यान् विधूतनिद्रान् विदधासि यस्त्वम् ।**
**तवेश तस्यामलबोधमूर्तेः सहामहे सम्प्रति नैव निद्राम् ॥ ५ ॥**

**निजाङ्घ्रीति** । हे **ईश** रङ्गनाथ । **यस्त्वम्** । **निजाङ्घ्रिसेवानिरतान्** निजयोरङ्घ्र्योः सेवायां निरताः आसक्ताः तान् । **मनुष्यान्** । **विधूतनिद्रान्** विधूता निद्रा यैस्तान् । निद्राप्रमादाज्ञानादिदोषास्तद्रहितानित्यर्थः । **विदधासि** करोषि । **तस्य अमलबोधमूर्तेः** न विद्यते मलं परिच्छिन्नत्वादिदोषः यस्य सोऽमलः स चासौ बोधश्च स एव मूर्तिः शरीरं यस्य सः तस्य । स्वभक्तनिद्राक्षयकर्तुः । **तव** । **सम्प्रति** इदानीम् । **निद्रां** स्वापं न

**सहामहे** नाङ्गीकुर्महे । स्वसेवकानामपि निद्रादिदोषहर्तुः निर्दोषस्य रङ्गनाथस्य निद्रालक्षणपापाङ्गीकारो न युक्त इति भावः ॥ ५ ॥

**नवाम्भोदनीलः स्फुरद्धेमजालः स्मरच्चित्तलोलः सुरश्रेणिपालः ।**
**श्रिये रङ्गधामाऽस्त्वयं पुण्यनामा महैश्वर्यसीमा गुणस्तोमभूमा ॥ ६ ॥**

**नवाम्भोदेति** । **नवाम्भोदनीलः** नवाम्भोदः वर्षाकालमेघः तद्वन्नीलवर्णः । **स्फुरद्धेमजालः** स्फुरन्ति यानि हेमानि हेममयाभरणानि तेषां जालं समूहो यस्य स तथा सुवर्णाभरणैर्भूषित इत्यर्थः । **स्मरच्चित्तलोलः** स्मरतां चित्ते लोलः सतृष्णः । स्मरच्चित्ते विद्यमान इत्यर्थः । **पुण्यनामा** पुण्यं पवित्रं नाम यस्य स तथोक्तः । **सुरश्रेणिपालः** सुराणां श्रेणिः पङ्क्तिः तां पालयतीति तथोक्तः । **महैश्वर्यतपसा** महच्च तदैश्वर्यं च महैश्वर्यं तस्य सीमा अवधिभूतः । **गुणस्तोमभूमा** गुणानां ज्ञानानन्दादीनां स्तोमाः समूहाः तैः भूमा व्याप्तः । **अयं रङ्गधामा** रङ्गं श्रीरङ्गाख्यक्षेत्रं रङ्गाख्यविमानं वा तदेव धाम आलयो यस्य स तथोक्तः श्रीरङ्गनाथः । **श्रिये** सम्पदे । **अस्तु** भूयात् । **भुजङ्गप्रयातं वृत्तम्** । 'भुजङ्गप्रयातं भवेद्यैश्चतुर्भिरि'ति तल्लक्षणात् ॥ ६ ॥

**सहस्रवदनः शेषः पञ्चवेदान् पठंस्तव ।**
**पञ्चास्योऽभूद्द्विजिह्वश्च त्वां क्षेत्रेण समं स्तुवन् ॥ ७ ॥**

श्रीरङ्गनाथतल्पभूतं शेषं वर्णयति – **सहस्रवदन** इति । **हे रङ्गनाथ तव** शय्याभूतः **शेषः सहस्रवदनः** अपि **पञ्चवेदान्**[१] ऋगादिवेदान् भारतं चेति पञ्चवेदान् । **पठन् सन्** । **पञ्चास्यः** पञ्चमुखः । **अभूत्** । हरिस्तवनानुपयोगिभिरन्यैर्मुखैः किं प्रयोजनमिति[२] भावेन पञ्चवदनोऽभवदिति भावः । **त्वां क्षेत्रेण समं** रङ्गक्षेत्रेण सह । **स्तुवन्** सन् **द्विजिह्वश्च** द्वे जिह्वे यस्य स द्विजिह्वश्च । (अभूत्) । पाठ्यानामृगादि-

---

१ 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति श्रुतिः ।

२ 'रोगो नाम न सा जिह्वा यया न स्तूयते हरिः ।'
'रोगो नाम न सा जिह्वा या न वक्ति हरेर्गुणान् ॥' – इति कृष्णामृतमहार्णवे (७७, ७८)

पञ्चवेदानां पञ्चसङ्ख्याकत्वात् स्तव्ययोः रङ्गक्षेत्रश्रीरङ्गनाथयोर्द्विसङ्ख्याकत्वात् पाठ्य-स्तव्यसमसङ्ख्याकमुखजिह्वावानभूदिति भावः । श्रीरङ्गनाथशय्याभूतस्य शेषस्य पञ्च-मुखत्वादियमुत्प्रेक्षा ॥ ७ ॥

**यथा श्रिया शयानः सततं रङ्गक्षेत्रे व्यरूरुचः ।**
**तथा हरे मेऽन्तरङ्गे रङ्गनाथ विरोचय ॥ ८ ॥**

**यथेति** । हे **हरे** त्वं **श्रिया** सह **रङ्गक्षेत्रे सततं यथा व्यरूरुचः** । रुचि दीप्ताविति धातोर्यङ्लुगन्ताल्लङ् । **तथा** हे **रङ्गनाथ** । **मे** मम **अन्तरङ्गे** हृदये । **विरोचय** प्रकाशय ॥ ८ ॥

चन्द्रपुष्करिणी(सरः)

**हित्वा हरजटागङ्गां यत्रेन्दुरतपत् तपः ।**
**चन्द्रपुष्करिणी सेयं मन्दभाग्यैर्न सेव्यते ॥ ९ ॥**

[1]चन्द्रपुष्करिणीं वर्णयति – **हित्वेति** । **इन्दुः** चन्द्रः । **हरजटागङ्गां** हरस्य जटायां विद्यमानां गङ्गामपि । **हित्वा** त्यक्त्वा । अनेन स्वभावोच्चत्वं स्थलकृतोच्चत्वं च गम्यते । **यत्र** चन्द्रपुष्करिण्यां **तपः** अतपत् । **सेयं चन्द्रपुष्करिणी** । **मन्दभाग्यैः** अल्पभाग्यैः । **न सेव्यते** । चन्द्रपुष्करिणीसेवा पुण्यवतामेव सङ्घटते नापुण्यवतामिति भावः ॥ ९ ॥

[2]कावेरी(नदी)

**कावेरि कमनीयाङ्गं रङ्गनाथं सदा हृदि ।**
**धत्से त्वत्सेवया देवि को नु कुर्यान्न तं हृदि ॥ १० ॥**

---

१ रङ्गपादोद्भवे देवि पुन्नगोत्सङ्गगामिनि ।
चन्द्रपुष्करिणि ख्याते गृहाणार्घ्यं नमोऽस्तु ते ॥ – इति चन्द्रपुष्करिण्यर्घ्यमन्त्रः

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

कावेरीं वर्णयति – **कावेरीति** । **हे कावेरि!** कवेराख्यमुनेरपत्यं स्त्रीः कावेरी तत्सम्बुद्धिः । तन्नामकनदिः **कमनीयाङ्गं** मनोज्ञशरीरं **रङ्गनाथं सदा हृदि** हृदये । **धत्से** दधासि । उभयकावेरीमध्ये विद्यमानत्वादिति भावः । **हे देवि!** कावेरि! **त्वत्सेवया तं** रङ्गनाथं **हृदि को नु** को वा । **न कुर्यात्** सर्वोऽपि कुर्यादेवेत्यर्थः । श्रीरङ्गनाथस्य कावेरीहृदयगतत्वेन तत्पानेन तस्याः हृदयान्तर्गतत्वे रङ्गनाथस्यापि हृदयान्तर्गमनं युक्तमिति भावः । 'एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापी'ति न्यायेन सर्वस्मिन्नपि कावेरी-जले एवमेव रङ्गनाथस्तिष्ठतीति सिद्धम् । एवं च तज्जलस्य पानेन हृदयान्तर्गमने तस्यापि हृदयान्तर्गमनं युक्तियुक्तम् । अतः [१]श्रीभागवतोक्तं कावेरीजलस्य विष्णुभक्तिदत्वं न केवलमागमेनैव सिद्धम् । किन्तु युक्तितोऽपि निश्चितमभूदिति भावः ।। १० ।।

**मोक्षदानक्षमाः सन्ति सरितस्तत्र तत्र हि ।**
**कावेरी चोलभूमाता भुक्तिमुक्तिकरी सरित् ।। ११ ।।**

**मोक्षदानेति** । **मोक्षदानक्षमाः** मुक्तिदाने समर्थाः । **सरितः** नद्यः । **तत्र तत्र** स्थले **सन्ति हि** । **चोलभूमाता** चोलानां चोलदेशीयानां जनानां या भूः तस्याः माता । **कावेरी सरित् भुक्तिमुक्तिकरी** ऐहिकामुष्मिकपुरुषार्थकरी । चोलभूमिस्थक्षेत्राणां नदी-मातृकतया कावेरीजलेनैव सस्योत्पत्तिरितीयमुक्तिः ।। ११ ।।

---

१ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ।
**कावेरी च महापुण्या** प्रतीची च महानदी ।।
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ।
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ।। – इति भागवते (११/५/३९,४०)

असिक्न्या **मरुद्वृधे** वितस्तया । – ऋग्वेदे

नमस्ते करालवदने नमस्ते कलिनाशिनि ।
नमस्ते देवि **कावेरि** गृहाणार्घ्यं नमोऽस्तु ते ।। – इति कावेर्यर्घ्यमन्त्रः

ततो गच्छेत **कावेरीं** वृतामप्सरसां गणैः ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् ।। – महाभारते

### वृषभशैलस्थितो हरिः

**यस्यान्तकोऽपि शिरसा दास्यं धत्ते तपस्तपन् ।**
**स स्याद्वृषभशैलेन्दुरस्माकं श्रेयसे हरिः ॥ १२ ॥**

वृषभशैलस्थितं हरिं वर्णयति – **यस्येति** । अन्तकोऽपि यमोऽपि । **तपस्तपन्** कुर्वन् । **यस्य** वृषभशैलस्थहरेः । **दास्यं** कैङ्कर्यम् । **शिरसा धत्ते** धारयति । **सः वृषभशैलेन्दुः** वृषभाख्यशैलस्य इन्दुरिव बृषभशैलेन्दुः हरिः । **अस्माकं श्रेयसे** मोक्षाय । **स्यात्** ॥ १२ ॥

### नूपुरगङ्गा(नदी)

**हरिनूपुरजातेऽलं कुरु गङ्गे मनो मम ।**
**परिहृत्य घनीभूतदुरितस्तोमकर्दमम् ॥ १३ ॥**

नूपुरगङ्गां वर्णयति – **हरीति** । **हरिनूपुरजाते** हरेर्नूपुराज्जाता तस्याः सम्बुद्धिः । **हे गङ्गे मम मनः** । **घनीभूतदुरितस्तोमकर्दमं** घनीभूतानि दृढीभूतानि यानि दुरितानि तेषां स्तोमः समूहः स एव कर्दमः पङ्कस्तम् । **परिहृत्य अलं कुरु** भूषय । नूपुरलक्षणालङ्कारजातायास्तव मनोऽलङ्करणं युक्तम् । जलप्रवाहरूपायास्तव पापपङ्काक्षालनमपि युक्तमिति द्वेधाऽपि वर्णनम् । पापं परिहृत्य मनःशुद्धिं कुर्विति तात्पर्यार्थः ॥ १३ ॥

### दर्भशयनः

**यत् प्राग् जघान तृणमप्यस्त्रीभूयापराधिनम् ।**
**दयालुरब्धौ तेनाभूद्दर्भशायीह राघवः ॥ १४ ॥**

दर्भशयनं वर्णयति – **यदिति** । **यत्** यस्मात् कारणात् । **प्राक्** पूर्वम् । **अपराधिनं** सीताकामुकत्वेनापराधकर्तारं कुरङ्गनामासुरम् । **तृणमपि** श्रीरामचन्द्रप्रयुक्तम् । **अस्त्रीभूय** अस्त्रं भूत्वा । **जघान** । **तेन** कारणेन । **अब्धौ** समुद्रे । **दयालुः** कृपावान् ।

**राघवः** श्रीरामः । इह स्थले **दर्भशायी** दर्भेषु शेते इति दर्भशायी दर्भशयनः । **अभूत्** । राघवो मार्गप्रदानाय समुद्रमुद्दिश्य तपःकर्तुं [१] दर्भशयनो जात इति न । प्रमाण-विरुद्धत्वात् । किन्तु प्राक् तृणमपि अस्त्रीभूय काकासुरं [२] जघान । तथा तृणराजत्वादिमे दर्भाः सकृत्स्वसजातावज्ञायाः जातत्वात् पुनराज्ञामनाकाङ्क्षमाणाः स्वयमेव गत्वा मार्गप्रदानलक्षणापराधिनं समुद्रं हनिष्यन्तीति समुद्रोपरि दयया दर्भानास्तीर्य तदुपरि शयनं कृतवान् । अत एव [३] दर्भशयनो जात इति भावः । **उत्प्रेक्षालङ्कारः** ।। १४ ।।

---

१ सम्प्राप्य दक्षिणमपां निधिमत्र देवः शिश्ये जगद्गुरुतमोऽप्यविषह्यशक्तिः ।
अग्रे हि मार्दवमनुप्रथयन् स धर्मं पन्थानमर्थितुमपांपतितः प्रतीतः ।।
– इति म.भा.ता.निर्णये (८/२)

२ समस्तपौरानुगतेऽनुजे गते स चित्रकूटे भगवानुवास ह ।
अथाजगामेन्द्रसुतोऽपि वायसो महासुरेणात्मगतेन चोदितः ।।
स चासुरावेशवशाद्रमास्तने यदा व्यधात्तुण्डमथाभिवीक्षितः ।
जनार्दनेनाशु तृणे प्रयोजिते चचार तेन ज्वलताऽनुयातः ।।
स्वयम्भुशर्वेन्द्रमुखान्सुरेश्वरान् जिजीविषुस्तान् शरणङ्गतोऽपि ।
बहिष्कृतस्तैर्हरिभक्तिभावतो ह्यलङ्घ्यशक्त्या परमस्य चाक्षमैः ।।
पुनः प्रयातः शरणं रघूत्तमं विसर्जितस्तेन निहत्य चासुरम् ।
तदक्षिगं साक्षिकमप्यवध्यं प्रसादतश्चन्द्रविभूषणस्य ।।
स वायसानामसुरोऽखिलानां वरादुमेशस्य बभूव चाक्षिगः ।
निपातितोऽसौ सह वायसाक्षिभिस्तृणेन रामस्य बभूव भस्मसात् ।।
ददुर्हि तस्मै विवरं बलार्थिनो यद्वायसास्तेन तदक्षिपातनम् ।
कृतं रमेशेन तदेकनेत्रा बभूवुरन्येऽपि तु वायसास्सदा ।।
भविष्यतामप्यथ यावदेव द्विनेत्रता काककुलोद्भवानाम् ।
तावत्तदक्ष्यस्य कुरङ्गनाम्नः शिवेन दत्तं दितिजस्य चाक्षयम् ।।
अतः पुनर्भावममुष्य हिन्वन् भविष्यतश्चैकदृशश्चकार ।
स वायसान् राघव आदिपूरुषस्ततो ययौ शक्रसुतस्तदाज्ञया ।।
– इति म.भा.ता.निर्णये (५/९-१६)

३ बध्नीहि सेतुमिह ते यशसो वितत्यै ।
गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ।। – इति भागवते (९/१०/१५)

### रामसेतुः

**सीतामात्मसुतां खलैरपहृतामानेष्यतः स्वां पुरीं**
**जामातुर्हितकारिणीव धरणी वार्ध्यम्बुवृद्धाकृतिः ।**
**भूभारक्षपणोद्यतस्य सचिवीभूता महीध्रा इव**
**श्रीरामस्य भटैः कृतो विजयते सेतुर्विजेतुर्द्विषाम् ॥ १५ ॥**

रामसेतुं वर्णयति – **सीतामिति** । **द्विषां** शत्रूणाम् । **विजेतुः** विजयशीलस्य । **श्रीरामस्य भटैः** कपिभिः । **कृतः सेतुः** । **खलैः** राक्षसैः । **अपहृतां आत्मसुतां** स्वपुत्रीम्। **सीतां स्वां पुरीं** अयोध्यां प्रति । **आनेष्यतः जामातुः** स्वपुत्रीभर्तुः रामस्य । **हितकारिणी** सहायकारिणी । अत एव **वार्ध्यम्बुवृद्धाकृतिः** वार्धेः समुद्रस्याम्बु जलं तस्मिन् वृद्धा अभिवृद्धा आकृतिर्यस्याः सा तथोक्ता । **धरणीव** भूमिरिव । ससेनस्य रामस्य समुद्रगमने सहायकर्त्री भूमिरित्येवेत्यर्थः । **भूभारक्षपणोद्यतस्य** भुवः भारायिता रावणादयः तेषां क्षपणं नाशनं तस्मिन्नुद्यतस्य उद्युक्तस्य श्रीरामस्य । **सचिवीभूताः** असचिवाः सचिवाः सम्पद्यन्ते तथाभूताः । भूभारक्षपणेन भूधराणामस्माकमपि भारो गमिष्यतीति धिया सहायीभूताः । **महीध्राः** पर्वता इव । 'महीध्रे शिखरि क्ष्माभृदि'-त्यमरः। **विजयते** शोभते । **उत्प्रेक्षालङ्कारः** ॥ १५ ॥

**प्रगीतजानकीनाथप्रतापस्वर्णवैभवे ।**
**प्रत्ययार्थमयं सेतुर्निकषाश्मायते नृणाम् ॥ १६ ॥**

**प्रगीतेति** । **अयं सेतुः प्रगीतजानकीनाथप्रतापस्वर्णवैभवे** प्रगीतः जनैः कीर्तितः यः जानकीजानिप्रतापः सीतापतिश्रीरामशौर्यं तदेव स्वर्णं हेम तस्य वैभवं सम्पत् तस्मिन् । **नृणां** मनुष्याणाम् । **प्रत्ययार्थं** निश्चयार्थम् । **निकषाश्मायते** सुवर्णवर्ण-निश्चायकोऽश्मा निकषाश्मेत्युच्यते । निकषाश्मवदाचरति । यथा निकषाश्मा सुवर्ण-निश्चायको भवति तथा सेतुः श्रीरामप्रतापनिश्चायको भवतीति भावः ॥ १६ ॥

**न मूर्च्छति शिलोच्चये पवनवेग इत्यज्ञवाग्**
**यतो हनुमताऽऽहृताः सुबहवो मरुत्सूनुना ।**
**गभीरतरवारिधिच्छदनचुञ्चवः पर्वता**
**जयन्ति कृतसेतवः क्षपणहेतवो रक्षसाम् ॥ १७ ॥**

**न मूर्च्छतीति** । **पवनवेगः** वायुजवः । **शिलोच्चये** पर्वते । 'अचलशैलशिलोच्चया' इत्यमरः । **न मूर्च्छति** न शक्नोति । अनिलगतिः पर्वतोन्मूलनाय न शक्नोतीत्यर्थः । मूर्च्छा मोहसमुच्छ्राययोरिति धातोर्लट् । इति (या वाक् सा) **अज्ञवाक्** [1]अज्ञानिवचनम् । (न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति । मारुतस्येति वदन् काव्यकारः सम्यङ् न जानातीत्यर्थः) । यतः कारणात् । **मरुत्सूनुना वायुपुत्रेण हनुमता । आहृताः** उन्मूल्यानीताः । **गभीरतरवारिधिच्छदनचुञ्चवः** गभीरतरः अत्यन्तगम्भीरः । 'निम्ना गभीरं गम्भीर'मित्यमरः । स चासौ वारिधिः समुद्रस्तस्य छदनेन आच्छादनेन चुञ्चवः वित्ताः प्रसिद्धाः । [2]तेन वित्तश्चुञ्चुप्चणपाविति चुञ्चुप्-प्रत्ययः। समुद्राच्छादने समर्था इत्यर्थः । अनेन बह्वायामविस्तरवत्त्वं पर्वतानां गम्यते । **कृतसेतवः** कृतः सेतुर्यैस्ते कृतसेतवः । **रक्षसां** राक्षसानाम् । **क्षपणहेतवः** । क्षपणे विनाशे हेतवः कारणानि । **सुबहवः पर्वताः जयन्ति** । यतो वायुसूनुना हनुमता पर्वताः उन्मूलिताः किल, किमु वक्तव्यं तत्पितुर्मारुतस्येत्यतो न मूर्च्छति शिलोच्चये पवनवेग इत्युक्तिरज्ञोक्तिरिति भावः ॥ १७ ॥

**पारावाराख्यरम्योपनिषदि विलसत्सेतवे सूत्रमात्रे**
**रामव्यासेन सेनानुगतिफलकृते दर्शिते रामभृत्यः ।**

---

१ अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्छति मारुतस्य ॥
– इति कालिदासः रघुवंशे (२/४४)

२ 'तेन वित्तश्चुञ्चुप्चणपौ' – इति पा.सू. (५/२/२६)

**नानास्थानोपनीतैर्हनुमदभिनवश्रीमदानन्दतीर्थ-**
**स्तेने मानाद्रिमानैस्तमिमतिदृढं रम्यमात्मीयगम्यम्** ॥ १८ ॥

**पारावारेति** । **पारावाराख्यरम्योपनिषदि** पारावारः समुद्रः । 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पति'रित्यमरः । तदाख्या च सा रम्योपनिचषच्च तस्याम् । **सेनानुगतिफलकृते** सेनायाश्चम्वाः अनुगतिः आनुकूल्येन गमनं तदेव प्रयोजनं तस्य कृते तदर्थम् । समुद्रे सेनया स्वगमनसिद्ध्यर्थमित्यर्थः । **विलसत्सेतवे** विलसंश्चासौ सेतुश्च तस्मै सेतुबन्धनायेत्यर्थः । **रामव्यासेन** रामश्चासौ व्यासश्च तेन । **सूत्रमात्रे** सूचनं केवलं सूत्रमात्रं तस्मिन् । एवं कर्तव्यमिति सूचनमात्रे । **दर्शिते** सति । **रामभृत्यः हनुमदभिनवश्रीमदानन्दतीर्थः** । अभिनवहनुमदाख्यश्रीमध्वाचार्यः । **नानास्थानोपनीतैः** नानाविधानि स्थानानि तेभ्य उपनीतानि तैर्नानादेशेभ्य आनीतैः । **अमानाद्रिमानैः** अमानाः अपरिमितास्ते च ते अद्रयश्च त एव मानानि प्रमाणानि तैः । **अतिदृढं आत्मीयगम्यं** आत्मीयैः स्वकीयैः कपिभिः गम्यम् । **रम्यं तमिमं** सेतुम् । **तेन** कृतवान् । रामेण सेतुबन्धनाय दिङ्मात्रे प्रदर्शिते । हनुमान्नानास्थानोपहृतैः पर्वतैः समुद्रे सेतुं चकारेति प्रस्तुतवाक्यार्थः । **पारावाराख्यरम्योपनिषदि** पारावारवद्गभिरोपनिषदि । **सेनानुगतिफलकृते** इनेन सहिताः सेनाः । विष्णुः स्वामी वयं तद्भक्ता इति ज्ञानिन इत्यर्थः । तेषामनुगतिः सम्यग्ज्ञानं तदेव फलं प्रयोजनं तस्य कृते तदर्थम् । सज्जीवानां सम्यग्ज्ञानार्थमित्यर्थः । **विलसत्सेतवे** उपनिषद्गतस्य वाक्यस्यायमेवार्थो नान्य इति मर्यादायै । **रामव्यासेन** क्रीडादिगुणविशिष्टवेदव्यासेन । **सूत्रमात्रे** उपनिषदर्थनिर्णायकब्रह्मसूत्रमात्रे । **दर्शिते** सति **रामभृत्यः हनुमदभिनवश्रीमदानन्दतीर्थः** । हनुमद्रूपः श्रीमदानन्दतीर्थः । **नानास्थानोपनीतैः** नानाप्रकरणस्थानात् संहृतैः **अमानाद्रिमानैः** अपरिमितपर्वतवद्दृढतरवाक्यप्रमाणैः । [1]**अतिदृढं** केनापि दूषयितुमशक्यम् । **आत्मीयगम्यं** वैष्णवैर्ज्ञेयम् । **रम्यं** अर्थतः शब्दतश्च मनोहरम् । **तमिमं** भाष्यानुव्याख्यानादिसूत्रव्याख्यानरूपं ग्रन्थजातम् । **तेने** । इतिरूपकलभ्योऽर्थः । **रूपकसमासोक्त्योः सङ्करः** ॥१८॥

---

१ अप्यदूष्यमतनोदनन्तधीर्भूतभाविभवदात्मभिः क्वचित् । – इति सुमध्वविजये (९/१८)

**रामाङ्घ्रिरेणुप्रेम्णेव सेतोरुभयतोऽम्बुधिः ।**
**अभ्येति पौनःपुन्येन वर्धमानः पदे पदे ॥ १९ ॥**

**रामेति** । **अम्बुधिः** समुद्रः । **रामाङ्घ्रिरेणुप्रेम्णेव** रामाङ्घ्र्योः रेणुषु प्रेम्णेव भक्त्येव। सेतौ रामेण सञ्चरितत्वादिति भावः । **पदे पदे** प्रतिपदविन्यासं प्रतिक्षणमित्यर्थः । **वर्धमानः** सन् **सेतोः** कूलं **उभयतः** । **पौनःपुन्येन** पुनः पुनरित्यर्थस्य भावः पौनःपुन्यं तेन । **अभ्येति** प्राप्नोति । उत्प्रेक्षालङ्कारः ॥ १९ ॥

श्रीरामदेवः

**सीतालक्ष्मणशोभिपार्श्वयुगलः प्रीत्याऽवनम्राकृतिं**
**वक्त्राम्भोरुहसक्तहस्तकमलं भक्तं भटाग्रेसरम् ।**
**एकान्ते हनुमन्तमुक्तिसुधया सन्तर्पयन् सन्ततं**
**रामः स्तम्भितवारिधिर्विजयते धानुष्कचूडामणिः ॥ २० ॥**

श्रीरामदेवं वर्णयति – **सीतेति** । **सीतालक्ष्मणशोभिपार्श्वयुगलः** सीतालक्ष्मणाभ्यां शोभि पार्श्वयुगलं यस्य स तथोक्तः । **प्रीत्या** भक्त्या । **अवनम्राकृतिं** । अवनम्रा नम्रीभूता आकृतिर्यस्य स तथोक्तस्तम् । **वक्त्राम्भोरुहसक्तहस्तकमलं** वक्त्राम्भोरुहे वदनाम्भोजे सक्तं न्यस्तं हस्तकमलं पाणिपद्मं येन स तथा तम् । राज्ञा सह एकान्तोक्तिसमये तदुपरि स्वमुखपिधानस्य कार्यत्वादिति भावः । **भक्तं** भक्तियुक्तम् । **भटाग्रेसरं** दूतश्रेष्ठम् । **हनुमन्तमेकान्ते** रहसि । **उक्तिसुधया** वचनामृतेन । **सततं सन्तर्पयन्** सुखयन् । **स्तम्भितवारिधिः** स्तम्भितः वारिधिर्येन स तथोक्तः । एकान्तव्यवहाराय निवारितसमुद्रघोष इत्यर्थः । **धानुष्कचूडामणिः** धनुः प्रहरणमेषामिति धानुष्काः । 'तदस्य प्रहरणमि'ति ठक् । तेषां चूडामणिः शिरोरत्नम् । धन्विनामग्रेसर इत्यर्थः । **रामो विजयते** शोभते ॥ २० ॥

---

* 'तदस्यां प्रहरणमिति क्रीडायां णः' – इति पा.सू. (४/२/५७)

### रामेश्वरः

**कामद्विषं कामितदानदक्षं श्रीमज्जटाजूटविभासिगङ्गम्।**
**रामेश्वरं रामकृतप्रतिष्ठं रामागृहीतार्धतनुं नतोऽस्मि ॥ २१ ॥**

रामेश्वरं वर्णयति – **कामद्विषमिति**। **कामद्विषं** कामं कन्दर्पं द्वेष्टीति कामद्विट् तं कामहरम् । **कामितदानदक्षं** कामितस्य अभीप्सितस्य दाने दक्षं समर्थम् । **श्रीमज्जटाजूटविभासिगङ्गं** श्रीमान् यो जटाजूटः तस्मिन् विभासिनी गङ्गा यस्य स तथा तम्। **रामागृहीतार्धतनुं** रामया स्त्रिया पार्वत्या गृहीता अर्धतनुरर्धशरीरं यस्य स तथा तम्। **रामेश्वरं** रामेश्वरनामकं शिवम् । **नतोऽस्मि** नमस्कृतवानस्मि । रामकृतप्रतिष्ठं रामगृहीतार्धतनुमिति विशेषणद्वयेन रामेण प्रतिष्ठितः **ईश्वरः** रामेश्वरः। रामायाः पार्वत्याः ईश्वरः स्वामी रामेश्वर इति व्युत्पत्तिरुक्ता भवति ॥ २१ ॥

### श्रीरामेश्वरप्रतिष्ठारहस्यम्

**कल्पान्ते सुरभूसुरासुरमुनिस्तोमं हरन् कं हरं**
**पृथ्व्यां पातककोटिपाटनपटू रामः समाराधयत्।**
**यत्पादाब्जरजोऽहरन्मुनिवधूपापं श्रुता यत्कथा**
**मुक्तिं दोग्धि परेशितुः परमियं लीला खलध्वंसिनः ॥ २२ ॥**

रावणवधजनितब्रह्महत्यादोषपरिहाराय श्रीरामेण प्रतिष्ठा कृतेत्युक्तिमसहमान आह – **कल्पान्त** इति। **पातककोटिपाटनपटुः** पातकानां पापानां कोट्यस्तासां पाटने विदारणे पटुः समर्थः। **रामः कल्पान्ते** प्रलये। 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपी'त्यमरः। **सुरभूसुरासुरमुनिस्तोमं** सुराः ब्रह्मादयो देवाः भूसुराः ब्राह्मणाः असुराः दैत्याः मुनयो वसिष्ठाद्याश्च तेषां स्तोमः समूहः तम् । **हरन्** संहरन्। **पृथ्व्यां कं हरं** सुरासुरादिसकलजगद्वधजनितपापपरिहाराय कं वा शिवम् । **समाराधयत्** राध साध संसिद्धाविति धातोर्लङ् । आराध्यशिवस्यापि नष्टत्वादिति भावः । अनेन रावणवधजन्मपापपरिहाराय शिवपूजा कृतेत्युक्तिरज्ञोक्तिरित्युक्तं भवति। ननु पापाभावे

किमर्थं रामेण लिङ्गप्रतिष्ठा कृतेत्याशङ्क्याज्ञानिजनमोहनायेत्याह – **यत्पादाब्जेति** । **यत्पादाब्जरजः** । यस्य रामस्य पादावेवाब्जं तस्य रजः धूलिः । **मुनिवधूपापं** मुनिवध्वाः गौतमपत्न्याः अहल्यायाः पापम् । परपुरुषसमागमजनितशिलारूपं दोषम् । **अहरत्** । **श्रुता यत्कथा** यस्य रामस्य कथा । **मुक्तिं** मोक्षम् । **दोग्धि** प्रापयतीत्यर्थः । 'दुह प्रपूरण' इति धातोर्लट् । [1]'दादेर्धातोर्घः' इति घकारः । [2]झषस्तथोर्धोऽधः इति धकारो जश्त्वं च । एतादृशस्य **परेशितुः** परेषां ब्रह्मादीनां ईशितुः स्वामिनः । **खलध्वंसिनः** दैत्यारेः रामस्य । **इयं** लिङ्गप्रतिष्ठा । [3]**लीला परं** अज्ञजनमोहिनी क्रीडैव । न तु पापपरिहारायेत्यर्थः । [4]'लीलैषाऽसुरमोहिनी'त्यादिवचनमुक्तार्थे मानम् ॥ २२ ॥

---

१ 'दादेर्धान्तोर्घः' – पा.सू. (८/२/३२) २ झषस्तथोर्धोऽधः –पा.सू.(८/२/४०)

३ क्वचिच्छिवं क्वचिदृषीन् क्वचिद्देवान् क्वचिन्नरान् ।
नमत्यर्चयति स्तौति वरानर्थयतेऽपि च ॥
लिङ्गं प्रतिष्ठापयति वृणोत्यसुरतो वरान् ।
सर्वेश्वरः स्वतन्त्रोऽपि सर्वशक्तिश्च सर्वदा ॥
सर्वज्ञोऽपि विमोहाय जनानां पुरुषोत्तमः ॥ – इति म.भा.ता.निर्णये (२/१३३-१३५)

त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा ।
द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥
स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु ।
मां च गोपय येन स्यात्सृष्टिरेषोत्तराधरा ॥
– इति महाभारततात्पर्यनिर्णयोद्धृत(२२/१६१,१६२)पाद्म(७१/१०६, ७)वचनम्

४ रामचन्द्रेण रावणवधजनितब्रह्महत्यापनुत्तये सेतौ लिङ्गप्रतिष्ठा तत्पूजादिकं कृतमिति यदुक्तं, तदपि 'न कर्मणा वर्धते नो कनीयान्', 'स एव सर्वभूतान्तरात्माऽपहतपाप्मा', 'दिव्यो देवः', 'एको नारायणः', 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' *इत्यादि श्रुतिस्मृतिभिर्नारायणस्य पुण्यपापरूपकर्मलेपाभावप्रतिपादनात् तद्विरुद्धम् । न च रामचन्द्रो नारायणो न भवति किन्त्वन्य एवेति वाच्यम् । रामोपनिषदि रामायणादौ च रामचन्द्रस्य नारायणावतारत्वप्रतिपादनात् । वाल्मीकिप्रोक्ते सर्ववैदिकपरिगृहीते रामायणे तादृशार्थस्य प्रतिपादनाच्च । +'अत्र पूर्वं महादेवः प्रसादमकरोन्मम' इति वैदेहीं प्रति प्रयाणे रावणवधात् पूर्वमेव महादेवप्रसादप्रतिपादनेन रावणवधजनितब्रह्महत्यापनुत्तये सेतौ लिङ्गप्रतिष्ठा

---

* भगवद्गीता (४/१४) + वाल्मीकिरामायणे (६/२६/१६)

**यं ध्यायंस्तारकब्रह्ममन्त्रं जपति धूर्जटिः ।**
**अघोत्ताराय काकुत्स्थः पूजयामास तं किल ॥ २३ ॥**

---

तत्पूजादिकं कृतमित्यस्याप्रमाणिकत्वात् । यद्यपि लिङ्गपुराणे रामायणसंक्षेपे – 'स कृत्वा वानरशतैः' इत्यादिना सेतौ प्रतिष्ठा तत्पूजादिकं कृतमित्यावेद्यते । तथापि तस्य तामसत्वेन अनादरणीयत्वम् । न हि परब्रह्मभूतस्य रामचन्द्रस्य लिङ्गप्रतिष्ठा तत्पूजादिना नानवाप्तमवाप्तव्यं किञ्चिदस्ति, पितृवाक्य-परिपालनवद्धर्मसंस्थापनार्थं तदिति चेन्न । 'यत्र रुद्रार्चनं भस्मधारणं प्रोच्यते बुधैः । तदब्रह्मण्यविषयं विप्राणां तु न कर्हिचित् ॥' इति हारीतस्मृत्या शिवलिङ्गार्चनस्य ब्राह्मणान् प्रत्यधर्मत्वावेदनाच्च । 'यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इत्यादि श्रुतिभिः रुद्रस्य क्षत्रियत्वावेदनात् । 'यो वै स्वां देवतामतियजेत' इत्यादिना सामान्यतः स्वानुरूपदेवतोपासनाविधानाच्च ।

शिवार्चनं शिवलिङ्गार्चनं च क्षत्रधर्म एवेति चेद्भवेदेषा कल्पना । यद्यत्र प्रमाणान्तरविरोधो न स्यात् । 'अहमप्यवतारेषु त्वां च रुद्र महाबल । तामसानां मोहनार्थं पूजयामि युगे युगे' इति पाद्मपुराणे तारकब्रह्मराजसंहितायां विष्णुना स्वावतारेषु तामसमोहनार्थं 'हे शिव! मयाऽपि त्वदर्चनं क्रियते' इत्युक्तत्वेन तस्य क्षत्रधर्मत्वावेदनाच्च ।

'अन्यदेव वरं देहि प्रसिद्धं सर्वजन्तुषु ।
मर्त्यो भूत्वा भवानेव मम साधय केशव ।
मां भजस्व च देवेश वरं मत्तो गृहाण च ।
येनाहं सर्वभूतानां पूज्यात्पूज्यतरोऽभवम् ।
देवकार्यावतारेषु मानुषत्वमुपेयिवान् ।
त्वामेवाराधयिष्यामि मम त्वं वरदो भव ॥'

– इत्यादिना वाराहे रुद्रगीतायां कूर्मपुराणे च शिवस्य विष्ण्वर्चनीयतया वरलब्धत्वावेदनेन तस्य च कृष्णावतारादिषु अर्जुनादेः सारथ्यादिकरणवत् आश्रितसौलभ्यप्रदर्शनार्थत्वेन परत्वाविघातित्वाच्च । ततश्च,

'सेतुमध्ये महादेवमीशानं कृत्तिवाससम् ।
स्थापयामास लिङ्गं तत् पूजयामास राघवः ।
तस्य देवो महादेवः स्वावरान्वरमुत्तमम् ॥'

– इत्यादि कूर्मपुराणप्रतिपन्नलिङ्गप्रतिष्ठा, तत्पूजादिकं ततो वरप्राप्त्यादिकं शिववरप्रार्थनानिमित्त-मेवेति न तावता शिवापेक्षया विष्णोरपकर्षसिद्धिः । विश्वामित्रभरद्वाजागस्त्यादीनां नमस्कारवत् तेभ्यो वरप्राप्त्यादिवच्च रामावतारे शिवलिङ्गार्चनस्यापि विष्णोः श्रुतिस्मृत्यादिसिद्धपरब्रह्मत्वपरमस्वातन्त्र्या-विघातित्वादिति । – इति श्रीविजयीन्द्रतीर्थश्रीपादकृतशैवसर्वस्वखण्डने ।

**यमिति**। **धूर्जटिः** शिवः। **यं** रामम्। **ध्यायन्** सन्। **तारकब्रह्ममन्त्रं** तारयतीति तारकः स चासौ ब्रह्ममन्त्रश्च तं श्रीराममन्त्रम्। **जपति** पुनःपुनः उच्चरति। 'जप अव्यक्त शब्द' इति धातोर्लट्। **काकुत्स्थः** ककुत्स्थकुलोद्भवः श्रीरामः। **अघोत्ताराय** पापपरिहाराय। **तं** स्वमन्त्रजापकं शिवम्। **पूजयामास किल**। किलेत्यपहासे। स्वाराधकस्याराधनं मोहनार्थमिति भावः॥ २३॥

**ब्रह्महत्यानिमित्तेन कपाल्यास्तेऽधुनाऽपि यः।**
**अंहस्तदेव संहर्तुं स रामस्यार्चितः किल ॥ २४॥**

**ब्रह्महत्येति**। **यः** शिवः। **अधुनाऽपि**। **ब्रह्महत्यानिमित्तेन** ब्रह्मणः वधः सैव निमित्तं कारणं तेन। **कपाली** ब्रह्मकपालोऽस्यास्तीति कपाली सन्। **आस्ते** (सः) शिवः ब्रह्महत्यादियुक्तः। **तदेव** ब्रह्महत्यास्वरूपमेव। **अंहः** पापम्। **संहर्तुं**। **रामस्य** कर्तरि षष्ठी। रामेण।[1] **अर्चितः किल** पूजितः किल। किलेत्यपहासे। 'स्वयमनवतीर्णः कः परान् तारयेदि'ति न्यायादिति भावः॥ २४॥

**यद्रावणवधे हेतुः सेतुर्जेतुं क्षमस्तमः।**
**तदघं तद्रिपोरासीदसङ्गस्य किलाद्भुतम् ॥ २५॥**

**यदिति**। **रावणवधे** रावणस्य वधः संहारस्तस्मिन्। **हेतुः** कारणम्। **सेतुः** रामसेतुः। **यत्** ब्रह्महत्यारूपम्। **तमः** पापम्। **जेतुं** हन्तुमित्यर्थः। **क्षमः** समर्थो भवति। 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'ति स्मृतेः। **तत्** ब्रह्महत्यारूपं **अघं** पापम्। **असङ्गस्य** पापपुण्यलेपरहितस्य। **तद्रिपोः** रावणशत्रोः रामस्य। **आसीत् किल** (इति यत् तत्) **अद्भुतं** आश्चर्यम्। रावणहनने परम्पराहेतोरपि ब्रह्महत्यानिवर्तकत्वं किल। साक्षाद्रावणहन्तू रामस्य ब्रह्महत्याख्यपापसम्बन्धो जात इत्येतदसङ्गतमिति भावः ॥ २५॥

---

[1] रामरामेति रामेति रमे रामे मनोरमे।
सहस्रनाम तत्तुल्यं रामनाम वरानने॥

## धनुष्कोटी

**यद्भारतस्थबहुतीर्थनिषेवणेन**
**लभ्यं फलं दिशति तन्मम सेतुखण्डः।**
**इत्थं धियेव परिवर्तितचापकोटचा**
**चिच्छेद सेतुमधिकं रघुपुङ्गवोऽत्र ॥ २६ ॥**

**यदिति** । **रघुपुङ्गवः** रघूणां पुङ्गवः श्रेष्ठः रामः । **भारतस्थबहुतीर्थनिषेवणेन** भारते भरतवर्षे तिष्ठन्तीति भारतस्थानि बहूनि तीर्थानि तेषां निषेवणं सेवा तेन । **यल्लभ्यं फलं** पुण्यम् । **तत्** पुण्यम् । **मम सेतुखण्डः** सेतोः खण्डः एकदेशः । **दिशति** ददाति । **इत्थं धियेव** सकलतीर्थसेवालभ्यपुण्यप्रदाने एतावानेव सेतुप्रदेशोऽलं उर्वरितप्रदेशोऽधिक इति बुद्ध्येव । **अत्र अधिकं सेतुं परिवर्तितचापकोट्या** परिवर्तितस्य चापस्य धनुषः कोट्या अग्रेण । [१]**चिच्छेद** । **उत्प्रेक्षालङ्कारः** ॥ २६ ॥

**जना नानादानाध्ययनयजनापूर्तविधिना**
**वृथा खिन्ना दैन्यं भजथ निजनिःश्रेयसकृते ।**
**सुरश्रेणीक्षोणीसकलसुजनाभीष्टफलदा**
**धनुष्कोटी पेटी सुकृतसुधनस्यास्ति महती ॥ २७ ॥**

**जना इति** । **हे जनाः** यूयं **निजनिःश्रेयसकृते** स्वमोक्षार्थम् । **नानादानाध्ययनयजनापूर्तविधिना** नानादानानि गोभूहिरण्याद्यनेकदानानि अध्ययनं वेदपाठः

---

१ सेतुनाऽनेन ते राम राजानः सर्व एव हि ।
बलोद्रिक्ताः समभ्येत्य पीडयेयुः पुरीं मम ॥
अतः सेतुमिमं भिन्धि धनुष्कोट्या रघूद्वह ।
इति सम्प्रार्थितस्तेन पौलस्त्येन स राघवः ॥
बिभेद धनुषः कोट्या स्वसेतुं रघुनन्दनः ।
अतो द्विजास्ततस्तीर्थं धनुष्कोटिरिति श्रुतम् ॥ – इति स्कन्दपुराणे ब्रह्मखण्डे (३०/७२-७५)

यजनं यागः आपूर्तं तटाकादिनिर्माणं तेषां विधिनाऽनुष्ठानेन । [१]**खिन्नाः** दैन्यं क्लेशम् । **वृथा** व्यर्थं **भजथ** बहुवित्तव्ययायाससाध्यत्वेनासुलभत्वादिति भावः । तर्हि कथं निःश्रेयसं भवतीत्यत आह – **सुरश्रेणीक्षोणीसकलसुजनाभीष्टफलदा** सुरश्रेणी देवतासमूहः सा च क्षोण्यां भूम्यां स्थिताः सकलसुजनाश्च तेषां यदभीष्टं फलं ददातीति तथोक्ता । **धनुष्कोटी** धनुष्कोट्याख्या । **सुकृतसुधनस्य** पुण्याख्यशोभनद्रव्यस्य । **महती** **स्थूला** । **पेटी** पेटिका मञ्जूषेत्यर्थः । **अस्ति** तिष्ठति । यतोऽतः निजनिःश्रेयसार्थं धनुष्कोटियात्रैव कर्तव्या । सुलभत्वादिति भावः ।। २७ ।।

**श्रीरामपादः**

**पातिव्रत्यपरिक्षयाख्यललनादोषाङ्कुरच्छेदनं**
**पाषाणीकृतगौतमार्यवनिताविज्ञानदानक्षमम् ।**
**साम्राज्योचितभोग्यभोगविरसं श्रीराम तेऽङ्घ्रिं श्रये**
**नैर्मल्याय निरन्तरस्मृतिकृते वैराग्यभाग्याय च ।। २८ ।।**

श्रीरामदेवं वर्णयति – **पातिव्रत्येति** । **पातिव्रत्यपरीक्षयाख्यललनादोषाङ्कुरच्छेदनं** पतिव्रतायाः भावः पातिव्रत्यम् । तस्य परिक्षयो नाशः पुरुषसंयोगजन्यः स इत्याख्या नाम यस्य स तथा यः ललनायाः [२]अहल्यायाः दोषः तस्य अङ्कुरं छिनत्तीति

---

१ कायक्लेशकरैः पुंसां किं तपोभिः किमध्वरैः ।
किं वैदैः किमु वा शास्त्रैर्धनुष्कोट्यवलोकिनः ।।
यथा सुराणां सर्वेषामुत्तमो रघुनन्दनः ।
तथैव च धनुष्कोटिः सर्वतीर्थोत्तमा मता ।।

– इति स्कन्दपुराणे ब्रह्मखण्डे (अ.३०,श्लो.८५, १०४)

२ अथो अहल्यां पतिनाऽभिशप्तां प्रधर्षणादिन्द्रकृताच्छिलीकृताम् ।
स्वदर्शनान्मानुषतामुपेतां सुयोजयामास स गौतमेन ।।
बलं स्वभक्तेरधिकं प्रकाशयन्ननुग्रहं च त्रिदशेष्वतुल्यम् ।
अनन्यभक्तां च सुरेशकाङ्क्षया विधाय नारीं प्रययौ तयाऽर्चितः ।।

– इति महाभारततात्पर्यनिर्णये (४/१०,११)

तथोक्तम्। **पाषाणीकृतगौतमार्यवनिताविज्ञानदानक्षमं** अपाषाणा पाषाणतया सम्पद्यते तथाकृतेति पाषाणीकृता या गौतमार्यवनिता गौतमऋषिभार्या अहल्या तस्याः विज्ञान-दानं तस्मिन् क्षमः समर्थस्तम्। संस्पर्शनमात्रेण चैतन्यप्राप्तेरिति भावः। **साम्राज्योचित-भोग्यभोगविरसं** साम्राज्ये उचितं योग्यं यद्भोग्यं विषयस्तस्य भोगोऽनुभवः तस्मिन् विगतरसस्तम्। [१]राज्यं त्यक्त्वा वनं गतत्वादिति भावः। **श्रीराम ते** तव। **अङ्घ्रिं** पादम्। **नैर्मल्याय** निर्मलस्वभावाय। पापपरिहारार्थं वा। **निरन्तरस्मृतिकृते** निरन्तरं स्मृतेः स्मरणस्य कृते स्मरणार्थम्। अनवरतस्मरणार्थमित्यर्थः। **वैराग्यभाग्याय च**। वैराग्यमेव भाग्यं तस्मै च। **श्रये** आश्रये। अन्तःकरणशुद्धिज्ञानवैराग्यभाग्यदाने क्षमं श्रीरामाङ्घ्रिं भजे इत्यर्थः। **क्रमालङ्कारः** ॥ २८ ॥

**कपिकटकधुरीणः कार्मुकन्यस्तबाणः**
**क्षपितदितिजसैन्यः क्षत्रियेष्वग्रगण्यः ।**
**जलधिरचितसेतुर्जानकीतोषहेतुः**
**पथि पथि गुणसान्द्रः पातु मां रामचन्द्रः ॥ २९ ॥**

**कपिकटकेति**। **कपिकटकधुरीणः** कपीनां कटकं सैन्यम्। 'भूभृन्नितम्ब-वलयचक्रेषु कटकोऽस्त्रिया'मित्यमरः। तस्य धुरीणो धुरन्धरः। **कार्मुकन्यस्तबाणः** कार्मुके न्यस्तः बाणः येन स तथोक्तः। **क्षपितदितिजसैन्यः** क्षपितं निरस्तं दितिजानां सैन्यं येन स तथोक्तः। **क्षत्रियेषु अग्रगण्यः** श्रेष्ठः। **जलधिरचितसेतुः** जलधौ रचितः सेतुर्येन स तथोक्तः। **जानकीतोषहेतुः** जानक्याः सीतायाः तोषे सन्तोषे हेतुः। **गुण-सान्द्रः** गुणैः सान्द्रः पूर्णः। **रामचन्द्रः** रामः चन्द्र इव। **पथिपथि** मार्गेमार्गे। **मां पातु** रक्षतु ॥ २९ ॥

---

१ त्यक्त्वा सुरेप्सिसुदुस्त्यजराज्यलक्ष्मीं धर्मिष्ठमार्यवचसा यदगादरण्यम्।
मायामृगं दयितयेप्सितमन्वधावद् वन्दे महापुरुष ते चरणारविन्दम्॥
– इति श्रीमद्भागवते (९/४/८)

## ताम्रपर्णी (नदी)

**ताम्रपर्णीसरित्तोयं सेवनीयं मुमुक्षुभिः ।**
**मुक्तीकरोति यत्रत्या शुक्तिश्च पतितं जलम् ॥ ३० ॥**

[१]ताम्रपर्णीनदीं वर्णयति – **ताम्रपर्णीति** । **मुमुक्षुभिः** मोक्षेच्छुभिः । **ताम्रपर्णीसरित्तोयं** ताम्रपर्णीसरितस्तोयं जलम् । **सेवनीयं** सेव्यम् । **यत्रत्या** ताम्रपर्णीजलजनिता । **शुक्तिश्च** मुक्तास्फोटोऽपि । 'मुक्तास्फोटस्त्रियां शुक्ति'रित्यमरः । 'च'शब्दोऽप्यर्थः । **जलं** उदकं जडमिति **ध्वनिः** । **मुक्तीकरोति** अमुक्ता मुक्ताः सम्पद्यन्ते इति तथाकरोतीति मुक्तामणिं करोतीत्यर्थः । संसारान्मुक्तं करोतीति **ध्वनिः** । ताम्रपर्णीजलजन्या शुक्तिरपि पापिनं मूर्खं मुक्तीकरोति । किमु तत्तोयम् । अतो मुमुक्षुभिः सेवनीयमिति ध्वनिलभ्योऽर्थः ॥ ३० ॥

## महेन्द्रपर्वतः

**तरणिरिव हनूमान् प्राप लङ्कां दिदृक्षु-**
**र्धरणि तव तनूजां नैव भेतव्यमम्ब ।**
**इति गदितुमिवान्तःप्रापितो भाति भूमेः**
**पवनसुतजवेनामन्दमाहेन्द्रशैलः ॥ ३१ ॥**

महेन्द्रपर्वतं वर्णयति – **तरणिरिवेति** । हे **धरणि** भूमे । **तव तनूजां** सीताम् । **दिदृक्षुः** द्रष्टुमिच्छुः । **हनूमान् तरणिरिव** सूर्य इव । **लङ्कां** रावणपुरीम् । **प्राप** ययौ । **हे अम्ब** मातः भूमे त्वया **नैव भेतव्यम्** पुत्रीनिमित्तभीतिर्न कर्तव्या । **इति गदितुमिव** भूम्यै कथयितुमिव । **पवनसुतजवेन** पवनसुतो हनूमान् तस्य जवो वेगस्तेन हनूमन्निपीडनेन । **भूमेरन्तःप्रापितः** । **अमन्दमाहेन्द्रशैलः** मन्दः स्वल्पो न भवतीत्यमन्दः स चासौ महेन्द्रशैलश्च स्थूलमहेन्द्रपर्वतः । **भाति** शोभते ॥ ३१ ॥

---

[१] मलयाचलसम्भूते मुक्ताहारविभूषिते ।
ताम्रपर्णीति विख्याते गृहाणार्घ्यं नमोऽस्तु ते ॥ – इति ताम्रपर्ण्यर्घ्यमन्त्रः

### कन्यादेवी कन्यातीर्थं च

**या सूते सेवमानानां भाग्यारोग्यापुनर्भवान् ।**
**कन्या किलेयं तीर्थं च कन्यातीर्थमिदं किल ॥ ३२ ॥**

कन्यादेवीं [१]कन्यातीर्थं च वर्णयति – **या सूत** इति । **या** कन्यादेवी (यत्) कन्यातीर्थं च । **सेवमानानां** स्वसेविनाम् । चतुर्थ्यर्थे षष्ठी । **भाग्यारोग्यापुनर्भवान्** । भाग्यमैश्वर्यम् । अरोगस्य भावः आरोग्यं तच्च । न विद्यते पुनर्भवो यस्मिन् स अपुनर्भवो मोक्षः स चैतान् । **सूते** प्रसूते । (सा) **इयं** देवी । **कन्या किल** किलेत्यपहासः । प्रसवानन्तरं कन्यात्वहानिरिति भावः । (तत्) **तीर्थं च कन्यातीर्थं किल** । किलेति पूर्ववद्भावः । कन्याकुमारीकन्यातीर्थसेविनां ऐहिकामुष्मिकपुरुषार्थो भवतीति भावः ॥३२॥

### कन्यादेव्याः पार्वतीत्वशङ्कानिवारणम्

**सहधर्मं विदधतीमिव बाणान्तकारिणीम् ।**
**वार्धौ स्निग्धामिमां रम्यां कन्यां मन्यामहे रमाम् ॥ ३३ ॥**

---

१ ..................... गच्छन् प्रभासं शापतो ग्राहदेहाः ।
अमूमुचच्चाप्सरसः स पञ्च ताभिर्गृहीतः प्रविकृष्य तीरम् ॥
एवं हि तासां शापमोक्षः प्रदत्तो यदाऽखिला वो युगपत्सम्प्रकर्षेत् ।
एकस्तदा निजरूपाप्तिरेवेत्यलं तुष्टेन ब्राह्मणेनानतानाम् ॥
विप्रापहासात्कुत्सितयोनितस्ताः **कन्यातीर्थे** पाण्डवः सम्प्रमुच्य ।
प्राप्तः प्रभासं वासुदेवानुजां तां शुश्राव रामेण सुयोधनोद्यताम् ॥
– इति म.भा.ता.निर्णये(२०/१६२-१६४)

ततस्तीरे समुद्रस्य **कन्यातीर्थ**मुपस्पृशेत् ।
तत्रोपस्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते ॥ – इति महाभारते (वन. ८५/२३)

दक्षिणं तत्र **कन्याख्यां** दुर्गां देवीं ददर्श सः ॥ – इति श्रीमद्भागवते (१०/७९/१७)

स्नात्वाऽत्र तीर्थेष्वचिरेण **कन्यकातीर्थे** सुतीर्थे सुखतीर्थ आप्लुतः ।
समुद्रसेतौ च निमज्य विष्णवे श्रीरामनाथाय नमश्चकार सः ॥ – इति सुमध्वविजये (५/४२)

कन्यादेव्यां पार्वतीत्वशङ्कां निवारयति – **सहधर्ममिति**। **बाणान्तकारिणीं** बाणस्य बाणासुरस्यान्तो नाशः तं करोतीति तथोक्ता ताम्। यद्वा, परशुराम-प्रयुक्तबाणस्य शरस्यान्तकारिणीम्। कन्यादेवी स्वविवाहाशयाऽऽगतस्य बाणासुरस्य वधं तत्र कृतवतीति **कथा**। गोकर्णात् परशुरामप्रयुक्तो बाणः कन्याकुमारीप्रान्ते पतित इति **कथा च पुराणप्रसिद्धा**। **वार्धौ स्निग्धां** स्नेहवतीम्। **रम्यां** मनोहराम्। **इमां कन्यां** कन्यादेवीम्। **सहधर्मं**[1] समानश्चासौ धर्मश्च सहधर्मस्तम्। स्वभर्त्रा नारायणेन समानधर्मं **विदधतीमिव** कुर्वाणामिव स्थितां **रमां** लक्ष्मीम्। **मन्यामहे** निरूपयामः। नारायणस्यापि बाणासुरान्तकारित्वात्। समुद्रशायित्वाच्चेति भावः ॥ ३३ ॥

### कन्याकुमार्याः लक्ष्मीत्वम्

**असि मन्मथमाता त्वं कन्ये मान्यतमे सताम्।**
**न चेत् सौन्दर्यमाश्चर्यं कथमेतत् तनौ तव*** ॥ ३४ ॥

कन्याकुमार्याः सौन्दर्यं वर्णयन् लक्ष्मीत्वं द्रढयति – **असीति**। **सतां मान्यतमे** पूज्यतमे। **हे कन्ये** कन्याकुमारि। **त्वं मन्मथमाता** कामजननी लक्ष्मीः। **असि** भवसि। **न चेत् वस्तनौ आश्चर्यं** अद्भुतम्। **एतत्** दृश्यमानम्। **सौन्दर्यं** लावण्यम्। **कथं** (भवेत्) मन्मथस्यापि सौन्दर्यं अतिसुन्दरलक्ष्मीकुमारत्वादिति भावः ॥ ३४ ॥

### अगस्त्यमुनिः

**अगस्त्यो मुनिशार्दूलो भवाब्धेर्नः समुद्धरेत्।**
**चुलकीकृतगम्भीरजृम्भिताम्भोधिडम्बरः** ॥ ३५ ॥

---

[1] यां यां परेश उरुधैव करोति लीलां तां तां करोत्यनु तथैव रमाऽपि देवी ॥
– म.भा.ता.निर्णये (५/३५)

'......... भर्तृसाधर्म्यं स्त्रीणां धर्मो यतः सदा' – म.भा.ता.निर्णये (२३/११)

* 'तथाऽप्यतुललावण्यैर्जनास्त्वां जानतेऽच्युतम्' (३/४२) इतिवत्।

कन्यातीर्थसमीपे व्यासपर्वतवासिनमगस्त्यं स्तौति – [१]**अगस्त्य** इति । **चुलकीकृतगम्भीरजृम्भिताम्भोधिडम्बरः** कुञ्चिताङ्गुलिहस्ततलगतजलं चुलकमित्युच्यते । अचुलकं चुलकं सम्पद्यते चुलकीकृतं समुद्रापोशनसमये चुलकजलं कृतम् । गम्भीरोऽगाधः स चासौ जृम्भितोऽभिवृद्धः अम्भोधिः समुद्रः । तस्य डम्बरं आडम्बरं येन स तथोक्तः । **मुनिशार्दूलः** मुनिश्रेष्ठः । **अगस्त्यः नः** अस्मान् । **भवाब्धेः** संसारसमुद्रात् । **समुद्धरेत्** । चुलकीकृताम्भोधेः संसाराख्यसमुद्रतारकत्वं सुलभमिति भावः ॥ ३५ ॥

### शुचीन्द्रक्षेत्रम्

**इन्द्रशौचविधानात् ते न शुचीन्द्रातिपौरुषम् ।**
**अनिन्द्रस्य मनः शौचं मम कृत्वा तदार्जय ॥ ३६ ॥**

शुचीन्द्राख्यक्षेत्रं वर्णयति – **इन्द्रेति** । हे **शुचीन्द्र** शुचीन्द्राख्यक्षेत्र । **ते** तव । **इन्द्रशौचविधानात्** इन्द्रस्य देवेन्द्रस्य शौचं शुद्धिः तस्य विधानात् करणात् । **अतिपौरुषं** अतिमाहात्म्यम् । **न** भवति । मिथ्यापवादशङ्कितो देवेन्द्रः शुचीन्द्रक्षेत्रे मेषमासे मध्याह्नकालीनसूर्यकिरणमात्रस्पर्शेन तप्तघृते अङ्गुलिदानाख्यदिव्येन कर्मणा शुद्धोऽभूदिति तत्रत्या **कथा** । **अनिन्द्रस्य** असमर्थस्य । **मम मनःशौचं** चित्तशुद्धिम् । **कृत्वा तत्** अतिपौरुषम् । **आर्जय** सम्पादय । समर्थरक्षणादप्यसमर्थरक्षणस्य श्रेयस्करत्वादिति भावः ॥ ३६ ॥

### आद्यनन्तशयनः

**शेषे शयान शरदिन्दुसमानवक्त्र**
**श्रीशादिकेशव सितोदकजातनेत्र ।**

---

१ अगाधमात्मन्यतिवेलमुद्धतं तिरस्कृताशेषसरस्वतीततिम् ।
कामं महामानसकुम्भसम्भवो लघूचकारेत्यपि बुद्धिसागरम् ॥ – सुमध्वविजये (५/१४)

**अगस्त्यो** माधवश्चैव मुचुकुन्दो महामुनिः ।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥

**दोषातिदूर गतपार गुणाम्बुराशे**
**दासे दयां कुरु मयीश गतेतराशे** ॥ ३७ ॥

आद्यनन्तशयनं वर्णयति – **शेष** इति । **शेषे** नागाधिपे **शयान** । **शरदिन्दु-समानवक्त्र** शरत्कालस्य इन्दुः चन्द्रः तेन समानं सदृशं वक्त्रं मुखं यस्य स तथा तत् सम्बुद्धिः । **श्रीश** लक्ष्मीपते । **सितोदकजातनेत्र** सितं शुभ्रं उदकजातं पद्मं तद्वन्नेत्रे यस्य स तत्सम्बुद्धिः । पुण्डरीकाक्षेति यावत् । [1]**दोषातिदूर** दोषाणां पारतन्त्र्यापूर्णतादीनां अतिदूरोऽत्यन्तदूरः तत्सम्बुद्धिः । तद्रहितेत्यर्थः । **गतपार** गतं विगतं पारमवसानं यस्य स तत्सम्बुद्धिः । **गुणाम्बुराशे** गुणैरानान्दादिभिरम्बुराशिरिवाम्बुराशिः पूर्णः तत्स-म्बुद्धिः। **ईश** समर्थ । **हे आदिकेशव** आद्यनन्तशयन (त्वं) **गतेतराशे** गता इतराशा अन्याशा यस्य स तथोक्तस्तस्मिन् । **दासे** भृत्ये । **मयि दयां कुरु** ॥ ३७ ॥

घृतमाला(नदी)

**रूक्षपापाटवीदाहदक्षज्ञानानलोन्नतेः ।**
**सततं हेतुभूतेयं घृतमाला विराजते** ॥ ३८ ॥

घृतमालानदीं वर्णयति – **रूक्षेति** । **रूक्षपापाटवीदाहदक्षज्ञानानलोन्नतेः** रूक्षाणि क्रूराणि यानि पापानि तान्येव अटवी क्रूरपापसमूह इत्यर्थः। तस्याः दाहे भस्मीकरणे दक्षः समर्थः यो ज्ञानानलः ज्ञानाग्निः । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' [2]इति वचनात् । तस्योन्नतिरभिवृद्धिः तस्याः । **सततं हेतुभूता** कारणीभूता । **इयं घृतमाला** नदी। **विराजते** । यथा घृतधारा अग्नेः अभिवृद्धिं करोति तथेयं नदी स्वस्नानपानादिना ज्ञानाग्नेः अभिवृद्धिं करोति । अत एव घृतमालेति नामाभूदिति भावः ॥ ३८ ॥

---

१ 'चिन्तासन्तापलेपोद्भवमृतिमुखराशेषदोषातिदूरम् ।' – इति तत्त्वप्रकाशिका ।

२ गीता (४/१९)

श्रीमदनन्तशयनः

श्रीभूम्यां कृतपादसेवनमनर्घ्योरुस्फुरद्भूषणं
शेषाङ्गे सततं शयानमुदरप्रोद्भासिपद्मं प्रभुम् ।
धात्रा स्तोत्रचयैः स्तुतं फणिफणैश्छत्रोपमैर्मण्डितं
सेवेऽनन्तपुरेश्वरं मुनिवरप्रेमाकरं श्रीकरम् ॥ ३९ ॥

श्रीमदनन्तशयनं वर्णयति – **श्रीभूम्यामिति** । **श्रीभूम्यां** लक्ष्मीधराभ्याम् । **कृतपादसेवनं** कृतं पादसेवनं यस्य स तथोक्तस्तम् । **अनर्घ्योरुस्फुरद्भुषणं** न विद्यते अर्घ्यं मूल्यं येषां तानि अनर्घ्याणि उरुस्फुरद्भूषणानि यस्य स तथा तम् । **शेषाङ्गे** शेषशरीरे । **सततं शयानं** । **उदरप्रोद्भासिपद्मं** उदरे प्रोद्भासि शोभमानं पद्मं यस्य स तथोक्तस्तं पद्मनाभमित्यर्थः । **प्रभुं** समर्थम् । **धात्रा** नाभिपद्मस्थितब्रह्मणा । **स्तोत्रचयैः** स्तुतिसमूहैः । **स्तुतं** । **छत्रोपमैः** धृतस्य श्वेतच्छत्रस्य उपमा येषां तैः । **फणिफणैः** शेषफणैः । **मण्डितं** अलङ्कृतम् । **मुनिवरप्रेमाकरं** मुनिवराणां कौण्डिन्यादिऋषिश्रेष्ठानां यः प्रेमा स्नेहस्तस्य आकरं उत्पत्तिस्थानम् । प्रेमाभिवृद्धिकारणमिति यावत् । **श्रीकरं** स्वभक्तानां सम्पत्करम् । **अनन्तपुरेश्वरं** अनन्तपुराख्यक्षेत्रस्य स्वामिनम् । **प्रभुं** समर्थं अनन्तशयनाख्यपद्मनाभम् । **सेवे** भजे ॥ ३९ ॥

किं *लोकात्मकपद्मकम्पनभिया पुत्रप्रियेणाथवा
नागाग्रेसरभोगसौभगकृतस्नेहेन वाऽहर्निशम् ।
किं वा श्रीश निजार्पितोरुविधसुस्वाद्वोदनास्वादनात्
शेषेऽनन्तपुरेश शेषवपुषि श्रीसेवया वाऽग्र्यया ॥ ४० ॥

---

१ ततः क्रमेण प्रचलन्नुपेयिवानवन्दतेन्दीवरसुन्दरच्छविम् ।
अम्भोजनाभं स भुजङ्गशायिनं श्रीवल्लभं श्रीमदनन्तसत्पुरे ॥ – इति सुमध्वविजये (५/३६)

* अजस्य नाभाविति यस्य नाभेरभूत् श्रुतेः पुष्करं लोकसारम् ।
– इति सूत्रभाष्योदाहृतस्कान्दवचनम् (१/१/१)

नित्यप्रबुद्धस्य अनन्तशयनस्य सदा शयने कारणान्युत्प्रेक्षते – **किं लोकेति** । हे **श्रीश** लक्ष्मीपते । **अनन्तपुरेश** अनन्तशयन (त्वम्) । **शेषवपुषि** शेषभोगे । **लोकात्मकपद्मकम्पनभिया** लोकाः चतुर्दशलोकाः ते आत्मा स्वरूपं यस्य तल्लोकात्मकं यत्पद्मं तस्य कम्पनं चलनं तस्य भिया भीत्या । **शेषे किं** शयनं करोषि किम् । किमिति प्रश्ने । स्वस्य चलनेन लोकात्मकपद्मकम्पो मा भूदिति बुद्ध्या शयनं करोषि वेति भावः । **अथवा** अथवेत्यादिपक्षान्तरे । **पुत्रप्रियेण** नाभिपद्मस्थितब्रह्माख्यपुत्रस्नेहेन (शेषे किं) **नागाग्रेसरभोगसौभगकृतस्नेहेन वा** नागाग्रेसरः सर्पश्रेष्ठः शेषः । तस्य भोगः शरीरम् । 'अहेः शरीरं भोगः स्यादि'ति हलायुधः । तस्य सौभगं सौकुमार्यं तस्मिन् कृतस्नेहेन वा । **अहर्निशं** अहोरात्रं अहश्च निशा च अहर्निशम् । (शेषे किं) । **निजार्पितोरुविध-सुस्वाद्वोदनास्वादनात्** निजैः स्वभक्तैरर्पितः उरुः श्रेष्ठः विविधः भक्ष्यभोज्यादिनाना-प्रकारः स्वादुः रुचिरः ओदनः । अन्नं तस्यास्वादानं भोजने तस्माद्वा। बह्वन्नपूर्णोदराणां लोके शयनदर्शनादिति भावः । (शेषे) **किं वा अग्र्यया** श्रेष्ठया । **श्रीसेवया** लक्ष्म्या कृतपादसेवया तत्सेवालोभेनेति यावत् । (शेषे किं वा) आश्रयस्य नित्यप्रबुद्धस्य च तव शयनमन्यथाऽनुपपन्नमिति भावः । **उत्प्रेक्षालङ्कारः** ।। ४० ।।

**त्रीणि त्रयी परिजगाद यदात्मदृष्टि-**
**द्वाराणि चारुतरशीलनरोचितानि ।**
**प्रत्यक्षमेतदनुभावयति प्रमेयं**
**प्रौढप्रजाः प्रभुरनन्तपुरेऽब्जनाभः ।। ४१ ।।**

**त्रीणीति** । **त्रयी** 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्याद्युपनिषद्रूपा श्रुतिः । 'इति वेदास्त्रयस्त्रयी'त्यभिधानात् । **चारुतरशीलनरोचितानि** चारुतरं वैराग्यादिसम्पन्नत्वेनातिमनोहरं शीलं स्वभावो येषां ते तथोक्तास्ते च ते नराश्च पुरुषाश्च तेषामुचितानि योग्यानि । **आत्मदृष्टिद्वाराणि** आत्मनः परमात्मनः दृष्टिः साक्षात्कारस्य द्वाराणि करणानि । **त्रीणि** । **परिजगाद** उक्तवतीति यावत् । **इत्येतत् प्रमेयं** **अब्जनाभः** पद्मनाभः **प्रभुः** समर्थः अनन्तशयनः । **अनन्तपुरे** अनन्तपुरक्षेत्रे ।

**प्रौढप्रजाः** प्रौढाः सूचितार्थज्ञाननिपुणाः याः प्रजाः जनाः ताः । **प्रत्यक्षं** यथा भवति तथा । **अनुभावयति** ज्ञापयति* । गतिबुद्धीत्यादिना द्विकर्मत्वम् । अनन्तशयने देवस्य पाद-समीपे एकं द्वारम् । उदरसमीपे एकं द्वारम् । मुखसमीपे एकम्। इति द्वारत्रयेणा-पादमस्तकं देवदर्शनं भवतीति सर्वानुभवसिद्धम् । एवं च 'श्रोतव्यो मन्तव्यो निदिध्या-सितव्यः' इत्यादि श्रुत्युक्तद्वारत्रयं भगवद्दर्शनसाधनमित्येतत् प्रत्यक्षमनुभूयत इति भावः ॥ ४१ ॥

**या तैत्तिरीयनिगमान्तगकिंवदन्ती**
**सेवात्रयोचितफलत्रितयं वदन्ती ।**
**तत्रत्यसंशयमपाकुरुतेङ्घ्रिमध्य-**
**वक्त्रं क्रमेण घटयन् दृशि पद्मनाभः ॥ ४२ ॥**

येति । **सेवात्रयोचितफलत्रितयं** सेवात्रयस्य पादमध्यमुखरूपावयरूपत्रयो-पास्तिरूपसेवात्रयस्य । उचितं योग्यं फलत्रितयम् । मोक्षे उपासिततत्तदवयवसाक्षा-त्काररूपफलानां त्रितयम् । **वदन्ती** प्रतिपादयन्ती । **या तैत्तिरीयनिगमान्तगकिंवदन्ती** निगमान्तो वेदान्तः । तैत्तिरीयनिगमान्तः। तैत्तिरीयोपनिषदित्यर्थः तस्मिन् गता । **किंवदन्ती** वार्ता । किंवदन्ती जनश्रुतिरित्यमरः । एतद्वै मुखतोऽन्नं राद्धम् । मुखतोऽन्नं राध्यते । 'इत्यादिरूपाऽस्तीति शेषः । **पद्मनाभः** पद्मं नाभौ यस्य सः पद्मनाभः अनन्त-शयनः । **तत्रत्यसंशयं** तत्रत्यं तैत्तिरीयोपनिषदि भवं संशयम् । **अङ्घ्रिमध्यवक्त्रं** अङ्घ्रिश्च मध्यं च वक्त्रं च । अङ्घ्रिमध्यवक्त्ररूपावयवानित्यर्थः । प्राण्यङ्गत्वादेकवद्भावः । क्रमेण तत्तद्वारगमनक्रमेण । **दृशि** द्रष्टॄणां चक्षुषि । **घटयन्** दर्शयन् सन् । **अपाकुरुते** निरा-करोति । पादोपासकस्य मोक्षे पाददर्शनमेव फलम् । मध्योपासकस्य मध्यदर्शनमेव फलम्। मुखोपासकस्य मुखदर्शनमेव फलं भवतीति तैत्तिरीयोपनिषद्गतप्रमेयं युक्तं न वेति सन्देहः । अनन्तशयने पादादिगतद्वारे गतस्य पादादिमात्रदर्शनेन निवर्तत इति भावः ॥ ४२ ॥

---

* 'गतिबुद्धिप्रत्यवसनार्थशब्दकर्माकर्मकाणमणि कर्ता स णौ ।' – इति पा.सू. (१/४/५२)

**पास्यनन्तपुरेश त्वमशेषं शेषशाय्यपि ।**
**तथा हि करुणावन्तः परकार्यधुरन्धराः ॥ ४३ ॥**

**पासीति** । हे **अनन्तपुरेश त्वं शेषशाय्यपि** शेषे अनन्ते शयानोऽपि शयालुत्वेनानुत्साहोऽपीति भावः । **अशेषं** सर्वं जगत् **पासि** रक्षसि । एतदर्थान्तरन्यासेनोपपादयति **तथाहीति** । **करुणावन्तः** दयावन्तः । **परकार्यधुरन्धराः हि** परेषामन्येषां यत्कार्यं तस्य धुरन्धराः निर्वाहकाः हि । कृतकृत्यत्वेन सदा शेषे शयानस्यापि तव शेषपालनं विनाऽशेषपालनं कृपया युज्यत इति भावः । शेषशायिनस्तवाऽशेषपालनं स्वकीयकार्यादपि परकार्ये आदरेणोपपद्यत इति **ध्वनितोऽर्थः** । अशेषपदस्य शेषव्यतिरिक्त इत्यर्थस्य गमकत्वात् ॥ ४३ ॥

**यथा गुहामुखे नाथ शेषे शेषे रमापते ।**
**तथा हार्दगुहामध्यमध्यासीनो रमस्व मे ॥ ४४ ॥**

**यथेति** । **रमापते** लक्ष्मीपते । **हे नाथ** स्वामिन् । अनन्तशयन त्वम् । **गुहामुखे** गुहायाः मुखे द्वारे । **शेषे** नागेन्द्रे । **यथा शेषे** शयनं करोति । 'शीङ् स्वप्ने' इति धातोर्लडात्मने पदे मध्यमपुरुषैकवचने रूपमेतत् । अनन्तशयनः गुहाद्वारे वसतीति **पुराणप्रसिद्धिः** । **तथा मे** मम । **हार्दगुहामध्यं** हृदिभवा हार्दा या गुहा तस्याः मध्यं तत् । **अध्यासीनः** अधितिष्ठन् । **रमस्व** क्रीडस्व । [1]अधिशीङ्स्थासां कर्मेति कर्मत्वाद्द्वितीया । तत्र वसन्निति यावत् । गुहामुखवासिनः हृदयगुहायां रमणस्योचितत्वादिति भावः ॥४४॥

**सुरगणपरिवारः शोभमानोरुहारः**
**करिकरसमहस्तः काञ्चनोद्दीप्तवस्त्रः ।**
**शुभजनकृतगानः शेषभोगे शयानः**
**प्रभुरयमविनाशः प्रीयतामिन्दिरेशः ॥ ४५ ॥**

---

[1] अधिशीङ्स्थासां कर्म । –इति पा.सू. (१/४/४६)

*सुरगणेति । **सुरगणपरिवारः** सुराः 'श्रीभूमिनारददिवाकरचन्द्रतारैः पञ्चायुधै-र्गरुडतुम्बुरुपर्वताद्यै'रित्युक्त्या देवाः तेषां गणः स एव परिवारः सेवकजनो यस्य स तथा। **शोभमानोरुहारः** शोभमानाः उरुहाराः उरवः बहवः हाराः यस्य स तथोक्तः । **करिकर-समहस्तः** करिणो गजस्य करः शुण्डा तस्य समाः सदृशाः हस्ताः यस्य स तथा। **काञ्चनोद्दीप्तवस्त्रः** काञ्चनवत् सुवर्णवदुद्दीप्तं शोभमानं वस्त्रं यस्य स तथा । **शुभजन-कृतगानः** शुभा ये जनाः सज्जनास्तैः कृतं गानं स्तुतिर्यस्य स तथा । **शेषभोगे शयानः** शेषस्य शरीरे शयानः । **प्रभुः** समर्थः । [१]**अविनाशः** न विद्यते विनाशो यस्य स तथा नित्य इत्यर्थः । **इन्दिरेशः** लक्ष्मीपतिः । **अयं** श्रीमदनन्तपद्मनाभः । **प्रीयतां** प्रीतो भवतु । अनेन प्रबन्धनिर्माणेन अनन्तशयनः प्रीणात्विति भावः ।। ४५ ।।

**ग्रन्थोपसंहारः**

**नानावृत्तं स्वयात्राक्रमपरिचितसुक्षेत्रमाहात्म्ययुक्तं**
**शब्दालङ्कारबद्धं शमलकुलहरश्लाघनीयार्थहृद्यम् ।**
**श्रीनाथप्रीतिहेतोर्हयवदनकृपाम्भोधिसम्भूतरत्नं**
**चक्रे तीर्थप्रबन्धं बहुगुणभरितं वादिराजो यतीन्द्रः ।। ४६ ।।**

कविः स्वनामग्रन्थनामकीर्तनपुरःसरं स्वकृतग्रन्थस्य हयग्रीवप्रसादलब्धत्वेना-त्युपादेयतां सूचयन् प्रबन्धं श्रीपतेरर्पयति – **नानेति** । **यतीन्द्रः** परमहंसश्रेष्ठः । **वादिराजः** वादिराजाख्यकविः । **नानावृत्तं** नानाविधानि वृत्तानि पथ्यावक्त्रोपेन्द्रवज्रादिनाना-वृत्तानि यस्य स तत्तथा । **स्वयात्राक्रमपरिचितसुक्षेत्रमाहात्म्ययुक्तं** स्वेन कृता तीर्थ-यात्रा तस्याः क्रमः अटनक्रमः तेन परिचितानि अभ्यस्तानि यानि सुक्षेत्राणि श्रीपरशुरामभूम्यादिशोभनक्षेत्राणि तेषां माहात्म्यं महिमा तेन युक्तं सहितं तत् ।

---

* **अनन्तपुरनाथ** ते पदसुपद्मसेवी जनो भवेद्विजितदुर्जनो दुरिततर्जनः सज्जनः ।
उपैति च परां गतिं सततमुन्नतिं सन्नतिं भवघ्न स पुनर्भवी परिभवी कथं स्याद्भवान् ।।
– सरसभारतीविलासे (१/४८)

१ अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।। – इति महावाराहे( गीतातात्पर्ये - २/१६)

**शब्दालङ्कारबद्धं** शब्दालङ्कारेणानुप्रासादिना बद्धं ग्रथितं तत् । **शमलकुलहरश्लाघनीयार्थहृद्यं** शमलानां पापानां कुलं समूहस्तत् हरन्तीति तथोक्ताः । 'पुरीषं शमलं मलमि'ति हलायुधः । ते च ते श्लाघनीयाः प्रशस्ताश्च ते अर्थाश्च तैर्हृद्यं मनोहरं तत् । **हयवदनकृपाम्भोधिसम्भूतरत्नं** हयवदनस्य हयग्रीवस्य कृपाम्भोधिः दयासमुद्रः तस्मात् सम्भूतं सञ्जातं रत्नमिव रत्नं तत् हयग्रीवप्रसादस्य मुख्यफलमित्यर्थः । **बहुगुणभरितं** बहवो गुणाः काव्योचितगुणाः तैर्भरितं पूर्णं तत् । **तीर्थप्रबन्धं** तीर्थानां प्रबन्धः प्रतिपाद्यतया बन्धनं यस्मिन् काव्ये तत्तीर्थप्रबन्धाख्यं काव्यं तत् । **श्रीनाथप्रीतिहेतोः** श्रीनाथस्य लक्ष्मीपतेः श्रीनारायणस्य प्रीतिः सैव हेतुः कारणं तस्मात् प्रीत्यर्थम् । 'निमित्तपर्यायप्रयोगेषु सर्वासां प्रायदर्शनमिति'[१] चतुर्थ्यर्थे षष्ठी । **चक्रे** चकार ॥ ४६ ॥

**फलश्रुतिः**

**पद्यानि प्रथितापगाच्युतयशोहृद्यानि तत्खण्डिता-**
**वद्येनामलवादिराजयतिना मध्वोक्तिशुद्धात्मना ।**
**बद्धान्यध्वरसिद्धसत्कृतचयोद्रिक्तोरुपुण्यप्रदा-**
**न्यद्धा यः पठते शृणोति स भवेदुद्दामधामा श्रियः ॥ ४७ ॥**

॥ इति श्रीमद्वादिराजतीर्थचरणकृततीर्थप्रबन्धे दक्षिणप्रबन्धः ॥ ४ ॥

# ॥ इति श्रीवादिराजश्रीपादकृततीर्थप्रबन्धः ॥

एतत् प्रबन्धगतश्लोकानां प्रत्येकं महाफलप्रदत्वमाह – **पद्यानीति** । **प्रथितापगाच्युतयशोहृद्यानि** प्रथिताः पुराणादिप्रसिद्धाः आपगाः गङ्गादिनद्यः तासाम् । च्युतो न भवतीत्यच्युतः श्रीनारायणः तस्य च यशः कीर्तिः ताभिर्हृद्यानि मनोहराणि । **मध्वोक्तिशुद्धात्मना** मध्वस्य या उक्तिर्वचनं तत्कृतशास्त्रमित्यर्थः । तस्यां शुद्धः आत्मा मनो यस्य स तथा तेन । मध्वशास्त्रासक्तमनसेत्यर्थः । **तत्खण्डितावद्येन** ताभिर्नदीभि-

---

१ निमित्तपर्यायप्रयोगेषु सर्वासां प्रायदर्शनम् (वार्तिकः-१५३)

स्तेन च खण्डितानि परिहृतानि अवद्यानि पापानि यस्य स तथा तेन । अत एव। **अमलवादिराजयतिना** निर्दोषवादिराजाख्ययतिना । **बद्धानि** रचि(ग्रथि)तानि । **अध्वरसिद्धसत्कृतचयोद्रिक्तोरुपुण्यप्रदानि** अध्वरैरश्वमेधादियज्ञैः सिद्धः सम्पन्नः सत्कृतचयः समीचीनपुण्यकर्मसमूहः तस्मादुद्रिक्तं अतिशयितं यदुरुपुण्यं तत्प्रददतीति तथोक्तानि । **पद्यानि** श्लोकान् । **यः** पुरुषः । **अद्धा** सम्यग् भक्त्यादिपूर्वकम् । **पठते** पठति। शृणोति परैः पठ्यमानमाकर्णयति वा । **सः** पुरुषः । **श्रियः** ऐहिकामुष्मिक-सम्पदः। **उद्दामधामा** उत्कृष्टावासभूतः । **भवेत्** जायेत । तस्मिन् सर्वसम्पदः सन्निहिता भवन्तीति भावः ।। ४७ ।।

यत्सन्निधानतस्तीर्थक्षेत्राणि भुवनत्रये ।
महतां महितान्यासंस्तस्मै श्रीपतये नमः ।। १ ।।

यश्चक्रे चक्रमीमांसां यश्चक्रे युक्तिमल्लिकाम् ।
मुकुन्दलीलां यश्चक्रे तस्मै काव्यकृते नमः ।। २ ।।

तपोविद्याविरक्त्यादिसद्गुणौघाकरानहम् ।
वादिराजगुरून् वन्दे हयग्रीवदयाश्रयान् ।। ३ ।।

**।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिततीर्थप्रबन्धस्य टीकायां लक्ष्मीपतिभट्टोपाध्यायसूनुनारायणाचार्येण कृतायां गुरुभावप्रकाशिकायां दक्षिणप्रबन्धः ।। ४ ।।**

******

## ।। इति तीर्थप्रबन्धव्याख्या गुरुभावप्रकाशिका ।।

******

**समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।**
**रमारमेशपादयोः प्रभञ्जनाभिधायुजा ।।**

## ।। श्रीकृष्णार्पणमस्तु ।।

******

परिशिष्टम् - १

# तीर्थदेवतास्मरणम्

राजोवाच

नदीषु मे वद ब्रह्मन् स्मर्तव्या मूर्तयो हरेः ।
का ध्येया विस्तरेणैव कृपया मयि भो गुरो ॥ १ ॥

वसिष्ठ उवाच

गङ्गायां माधवो देवः शङ्खचक्रगदाधरः ।
लसत्पद्मधरो ध्येयस्तत्र स्नानं नरेश्वर ॥ २ ॥

गोदावर्यां महानद्यां वीरनारायणो नृप ।
गदापद्मारिशंखैश्च शोभितो ध्येय एव हि ॥ ३ ॥

कृष्णवेण्यां नृपश्रेष्ठ कृष्णः साक्षाज्जनार्दनः ।
चतुर्बाहुर्महातेजाः शङ्खचक्रासिशार्ङ्गधृक् ॥ ४ ॥

कालिन्द्यां धर्मजातायां कृष्णनामा हरिर्नृप ।
चतुर्बाहुः सदा ध्येयो दण्डशङ्खासिशार्ङ्गधृक् ॥ ५ ॥

सरस्वत्यां महाभाग पद्मनाभं स्मरेन्नृप ।
कावेर्यां रङ्गनाथं तु सरय्वां राममेव च ॥ ६ ॥

यमुनायां महानद्यां कृष्णं कालियमर्दनम्।
नर्मदायां महाविष्णुं चतुर्बाहुं नृपोत्तम ॥ ७॥

वराहं तुङ्गभद्रायां सिन्धौ क्षीराब्धिशायिनम् ।
नृसिंहं भवनाशिन्यां कुमुद्वत्यां त्रिविक्रमम् ॥ ८ ॥

वञ्जुलायां हयग्रीवं भीमरथ्यां तु श्रीधरम् ।
अनन्तं ताम्रपर्ण्यां वै मलहार्यां जनार्दनम् ॥ ९ ॥

पिनाकिन्यां महाभाग केशवं क्लेशनाशनम् ।
पद्मशङ्खारियुक्तं च गदापरिघशोभितम् ॥ १० ॥

पृथक् सागरगामिन्यो या नद्यः सन्ति भूतले ।
तासु सर्वासु राजेन्द्र दत्तात्रेयं स्मरेत् सदा ॥ ११ ॥

स्वामिपुष्करिणीतीर्थे श्रीभूमिसहितं विभुम् ।
कटिस्थवामबाहुं तं वरदेन करेण च ॥ १२ ॥

युतं शङ्खारियुक्तं च प्रसन्नाधोक्षजं स्मरेत् ।
वामनं संस्मरेद्राजन् चन्द्रपुष्करिणीजले ॥ १३ ॥

संस्मरेन्नृपतिश्रेष्ठ मानसे मधुसूदनम् ।
देवखातेषु राजेन्द्र संस्मरेत् तु गदाधरम् ॥ १४ ॥

क्षुद्रापगासु राजेन्द्र लक्ष्मीनारायणं स्मरेत् ।
तटाके संस्मरेद्राजन् शेषशायिनमच्युतम् ॥ १५ ॥

वापीषु संस्मरेन्नित्यं चक्रपाणिं महाविभुम् ।
सरोवरेषु राजेन्द्र केशवादींश्च संस्मरेत् ॥ १६ ॥

एवमाद्या हरेर्मूर्तीः पूर्णधर्मफलेप्सुभिः ।
स्मर्तव्या सततं भूप नात्र कार्या विचारणा ॥ १७ ॥

॥ इति ब्रह्माण्डपुराणे तीर्थदेवतास्मरणम् ॥

******

परिशिष्टम् - २

# विविधतीर्थेषु चिन्त्यभगवद्रूपाणि

| | | | | | |
|---|---|---|---|---|---|
| गङ्गा | - | माधवः | भीमरथी | - | श्रीधरः |
| गोदावरी | - | वीरनारायणः | ताम्रपर्णी | - | अनन्तः |
| कृष्णवेणी | - | कृष्णः | मलापहारी | - | जनार्दनः |
| कालिन्दी | - | यमपुत्रकृष्णः | पिनाकिनी | - | केशवः |
| सरस्वती | - | पद्मनाभः | महानदीषु | - | केशवादिरूपाणि |
| कावेरी | - | रङ्गनाथः | उपनदीषु | - | लक्ष्मीनारायणः |
| सरयू | - | रामः | सरोवरेषु | - | दत्तात्रेयः |
| नर्मदा | - | महाविष्णुः | स्वामिपुष्करणी | - | अधोक्षजः |
| तुङ्गभद्रा | - | वराहः | चन्द्रपुष्करणी | - | वामनः |
| सिन्धु | - | क्षीराब्धिशायी | मानससरोवरे | - | मधुसूदनः |
| भवनाशिनी | - | नृसिंहः | देवखातेषु | - | गदाधरः |
| कुमुद्वती | - | त्रिविक्रमः | तटाकेषु | - | शेषशायी अच्युतः |
| वञ्जुला | - | हयग्रीवः | वापीषु | - | चक्रपाणिः |

******

परिशिष्टम् - ३

# नदीतारतम्यस्तोत्रम्

विष्णुपादाब्जसम्भूता गङ्गा सर्वाधिका मता ।
ततो गोदावरी न्यूना कृष्णवेणी ततोऽधमा ॥ १ ॥

स्वामिचन्द्रापुष्करिण्यौ मानसं च सरोवरम् ।
कृष्णवेण्याः समास्ताभ्यः कावेरी च सरस्वती ॥ २ ॥

हीनेऽन्योन्यसमे ताभ्यामूना च सरयू तथा ।
तुङ्गभद्रा समा तस्याः कालिन्दयूना ततोऽधमा ॥ ३ ॥

नर्मदा सिन्धुसरितौ तत्समा भवनाशिनी ।
ततः कुमुद्वती नीचा ततो नीचा मलापहा ॥ ४ ॥

ताम्रपर्णी भीमरथी वञ्जुला च पिनाकिनी ।
पृथक् सागरगामिन्यो नद्यो भीमरथीसमाः ॥ ५ ॥

ततोऽन्या सरितो नीचास्तटाकाश्च ततोऽधमाः ।
ततो नीचाः पुष्करिण्यो देवखाताश्च तत्समाः ॥ ६ ॥

ततो वाप्योऽधमास्ताभ्यः कूपाः सर्वाधमा मताः ।
स्वोत्तमार्घ्यं प्रदातव्यमवरासु न चान्यथा ॥ ७ ॥

राघवेन्द्रेण यतिना ब्रह्माण्डाख्यपुराणगः ।
इत्युद्धृतः सारभागो नदीनीचोच्चसूचकः ॥ ८ ॥

॥ इति श्रीराघवेन्द्रयतिकृतनदीतारतम्यस्तोत्रम् ॥

******

परिशिष्टम् - ४

# तीर्थप्रबन्धश्लोकार्धानुक्रमणिका

॥ इति तीर्थप्रबन्धश्लोकार्धानुक्रमणिका ॥

******

परिशिष्टम् - ५

# श्रीवादिराजस्तुतिः

चन्द्रार्ककोटिलावण्यलक्ष्मीशकरुणालयम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ १ ॥

इन्द्रादिदेवताराध्यमध्वसद्वंशमादरात् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ २ ॥

श्रीहयास्यार्चनरतं साधुवेदार्थबोधकम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ ३ ॥

दुर्वादिमत्तद्विरदकण्ठीरवमहर्निशम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ ४ ॥

सर्वकामप्रदं श्रीमद्द्विजेन्द्रकुलशेखरम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ ५ ॥

मन्त्रक्रमविचारज्ञं तन्त्रशास्त्रप्रवर्तकम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ ६ ॥

ज्ञानादिगुणसम्पन्नमशेषाघहरं शुभम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ ७ ॥

प्रदक्षिणीकृतभुवं स्वक्षमालाधरं विभुम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ ८ ॥

विचित्रमकुटोपेतमचिन्त्याद्भुतदर्शनम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ ९ ॥

पुरतो व्यासदेवस्य निवसन्तं महाद्युतिम् ।
वन्दिताङ्घ्रियुगं सद्भिर्वादिराजं नतोऽस्म्यहम् ॥ १० ॥

॥ इति श्रीवेदवेद्यतीर्थकृता श्रीवादिराजगुरुस्तुतिः ॥

******

परिशिष्टम् - ६

# श्रीवादिराजाष्टकम्

श्रीविष्णुतीर्थसद्वंशभूषणं मितभाषणम् ।
भक्तार्तिभञ्जनं श्रीमद्वादिराजमहं भजे ॥ १ ॥

वागीशतीर्थसद्धस्तपङ्कजोद्भवमञ्जसा ।
प्रसन्नवदनं श्रीमद्वादिराजमहं भजे ॥ २ ॥

भुजङ्गाङ्कितसद्बाहुं भूरिभूसुरसेवितम् ।
भूधराङ्घ्रिरतं श्रीमद्वादिराजमहं भजे ॥ ३ ॥

पञ्चवृन्दावनगतं पञ्चायुधधरं गुरुम् ।
पञ्चरूपिप्रियं श्रीमद्वादिराजमहं भजे ॥ ४ ॥

दूरीकृतारिषड्वर्गमङ्गीकृतसदागमम् ।
धिक्कृतान्यमतं श्रीमद्वादिराजमहं भजे ॥ ५ ॥

दीनानुकम्पिनं शश्वत् शरणागतरक्षकम् ।
सर्वसम्पत्प्रदं श्रीमद्वादिराजमहं भजे ॥ ६ ॥

श्रीमत्कूर्मासनारूढं काषायाम्बरधारिणम् ।
कमनीयतमं श्रीमद्वादिराजमहं भजे ॥ ७ ॥

हयग्रीवपदाम्भोजयुगलार्पितमानसम् ।
ज्ञानानन्दमयं श्रीमद्वादिराजमहं भजे ॥ ८ ॥

यतिना वादिवन्द्येन रचिताष्टकमन्वहम् ।
पठन् विजयमाप्नोति गुरुभक्तिं च दुर्लभाम् ॥ ९ ॥

॥ इति श्रीवादिवन्द्ययतिकृतं श्रीमद्वादिराजाष्टकम् ॥

******

समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥

******



## Works of Sri Vidyeshatirtha Swamiji

* * * * * *

१) हरितत्त्वचूडामणि

२) गीतेयल्लि प्राणतत्त्व महिमे

३) भागवतवु बेळगिद वेदान्त दीपावळि

४) अहं ब्रह्मास्मि

५) गुरि इल्लद दारि

६) भगवन्त निर्गुण, निराकारने ?

७) शिवरात्रि रहस्य

८) वासुदेवनल्लि गीताकटाक्ष

९) गीतासारसौरभ

१०) गीतार्थवैभव

११) गायत्रीहृदय

१२) गायत्रियल्लि अध्यात्मदीप

१३) गायत्रीभावतिलकम् (संस्कृतम्)

१४) गायत्री कण्ड रामायण

१५) कठतत्त्वकौस्तुभ

१६) काठकतत्त्वमाला

१७) गायत्रियल्लि व्यासचिन्तन

१८) भागवतरससन्देश